卐 श्रीमद्राघवो विजयते 卐

# श्रीरामस्तवराजस्तोत्रम्

## (श्रीराघवकृपाभाष्यम्)



भाष्यकाराः

धर्मचक्रवर्ती श्रीतुलसीपीठाधीश्वर

जगद्गुरु रामानन्दाचार्य स्वामी

श्रीरामभद्राचार्य महाराजाः

# श्रीरामस्तवराजस्तोत्रम्

## (श्रीराघवकृपाभाष्यम्)



भाष्यकाराः

**सर्वाम्नाय धर्मचक्रवर्ती महामहोपाध्याय**
**श्रीतुलसीपीठाधीश्वर श्रीमज्जगद्गुरु**
**रामानन्दाचार्य स्वामी श्रीरामभद्राचार्याः**
(चित्रकूटीयाः)

प्रकाशक

**श्रीतुलसीपीठ सेवान्यास**
आमोदवन चित्रकूट
सतना (म०प्र०)

**प्रकाशक :**
श्रीतुलसीपीठ सेवान्यासः
आमोदवन चित्रकूटधाम
(सतना) म०प्र०
दूरभाष : ०७६७०-६५४७८

**प्रथम संस्करणम्**—मकर संक्रान्ति संवत् २०५७ सन् २००१

**पुस्तक प्राप्ति स्थान :**
(१) श्रीतुलसीपीठ, आमोदवन, चित्रकूट (सतना) म०प्र०
(२) वसिष्ठायनम्, रानीगली, भोपतवाला, हरिद्वार (उ०प्र०)

**न्यौछावर** – ५१=०० एकपञ्चाशत् रुप्यकाणि

**मुद्रक :**
साहित्य सेवा प्रेस
१५६, छीपी टैंक, (रामा होटल कम्पाउण्ड)
मेरठ (उ० प्र०)
(केवल मुद्रण कार्य)

॥श्रीमद्राघवो विजयते॥

# द्वित्राः शब्दाः

नीलतामरसः श्यामकान्तये श्रितशान्तये।
रामाय पूर्णकामाय जानकीजानये नमः॥१॥

श्रीरामस्तवराजस्य विशिष्टाद्वैतसम्मतम्।
श्रीराघवकृपाभाष्यं द्वाभ्यां गीर्भ्यां मया कृतम्॥२॥

भाषायां देवभाषायां रामभद्राय सूरिणा।
श्रीराघवकृपाभाष्ये कृते रामः प्रसीदतु॥३॥

मोदन्तां वैष्णवाः सन्तः प्रमोदन्तां विपश्चितः।
सारस्वतीं निरीक्ष्येतां वरिवस्यां मया कृताम्॥४॥

श्रीराघवकृपापात्र सम्प्रदृश्या पदे पदे।
ततो ग्रन्थललामेदं राघवाय समर्पये॥५।

श्रीरामस्तवराज संस्कृत स्तोत्रकाव्यों का शिरोरत्न तथा श्रीसीताराम-भक्ति का अनुपम भाण्डागार है। इसके पाठ से एक साधक लौकिक तथा पारलौकिक दोनों प्रकार की कामनाओं की सिद्धि प्राप्त कर लेता है। यद्यपि इस पर पूर्व के दो भाष्य उपलब्ध होते हैं परन्तु वर्तमान परिस्थितियों एवं नवीन विचारों तथा शास्त्रीय सिद्धान्तों की यथापेक्ष निदर्शना के कारण मैंने राघवकृपाभाष्य का प्रणयन अत्यावश्यक माना। संस्कृतज्ञों के लिए संस्कृत तथा जनसाधारण को श्रीरामस्तवराज के सिद्धान्तों, भावों एवं रहस्यों को समझाने के लिए हिन्दी में श्रीराघवकृपाभाष्य की रचना की। जो प्रत्येक श्लोक के साथ ही क्रमशः विन्यस्त है। श्रीराघवकृपाभाष्य को लिपिबद्ध करने में मेरे सुयोग्यतम शिष्य, संस्कृतभाषा के नदीष्ण विद्वान पण्डितप्रवर श्री दिवाकर शर्मा आचार्य ने बड़ी ही महत्वपूर्ण भविष्णु भगीरथ भूमिका

निभायी है। एतदर्थ मैं उनके प्रति अनेक मंगलाशंसनशासन करता हुआ उन पर अविरल कृपावृष्टि करने के लिए श्रीसीतारामजी से प्रार्थना करता हूँ। मैं आयुष्मान् प्रिय शिष्य डा० सुरेन्द्र शर्मा सुशील को भी इस ग्रन्थ के सम्पादन में सारस्वत सहयोगार्थ बहुत आशीर्वाद ज्ञापित करता हूँ और इसके मुद्रण में कागज का व्ययभार वहन करने के लिए सौहार्दभाजन भवानी पेपर मिल्स रायबरेली के मैनेजिंग डायरेक्टर श्री टण्डन जी तथा मैनेजर श्री एस० पद्मनाभन जी को भी मैं मंगलाशंसन ज्ञापित करता हूँ।

**श्री राघवः शन्तनोतु।**

**इति मंगलमाशास्ते**
**जगद्गुरु रामानन्दाचार्य**
**स्वामी रामभद्राचार्य**

# विनम्र निवेदन

सुधीपाठकों से विनम्र निवेदन है कि श्रीवैष्णव समाज के कल्याणार्थ यह श्रीरामस्तवराजस्तोत्र पूज्यपाद जगद्गुरुजी ने आडियो कैसेट में अपने श्रीमुख से निबद्ध किया था। हमें इस दिव्यग्रन्थरत्न को लिपिबद्ध करने का सौभाग्य प्राप्त हुआ। बहुत सावधानी रखते हुए भी अज्ञानवश कुछ अशुद्धियाँ अवश्य रह गयी होंगी। अतः आप विज्ञ महानुभाव इसमें हमारी ही त्रुटि मानकर क्षमा करें।

श्रीगुरुचरणपंकेरुहचंचरीक
**आचार्य दिवाकर शर्मा**
**डा० सुरेन्द्र शर्मा 'सुशील'**
गाजियाबाद (उ०प्र०)

# श्रीरामस्तवराजस्तोत्रम्

श्रीगणेशाय नमः। अस्य श्रीरामचन्द्रस्तवराजस्तोत्रमन्त्रस्य सनत्कुमार-ऋषिः। श्रीरामो देवता। अनुष्टुप् छन्दः। सीता बीजम्। हनुमान्-शक्तिः। श्रीरामप्रीत्यर्थे जपे विनियोगः।

सूत उवाच

**सर्वशास्त्रार्थतत्त्वज्ञं व्यासं सत्यवतीसुतम्।**
**धर्मपुत्रः प्रहृष्टात्मा प्रत्युवाच मुनीश्वरम्॥१॥**

**भगवन् योगिनां श्रेष्ठ सर्वशास्त्रविशारद।**
**किं तत्त्वं किं परं जाप्यं किं धनं मुक्तिसाधनम्॥२॥**

**श्रोतुमिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम॥३॥**

वेदव्यास उवाच

**धर्मराज महाभाग शृणु वक्ष्यामि तत्त्वतः॥४॥**

**यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम्।**
**तदेव परमं तत्त्वं कैवल्यपदकारणम्॥५॥**

**श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम्।**
**ब्रह्महत्यादिपापघ्नमिति वेदविदो विदुः॥६॥**

**श्रीराम रामेति जना ये जपन्ति च सर्वदा।**
**तेषां भुक्तिश्चच मुक्तिश्च भविष्यति न संशयः॥७॥**

**स्तवराजं पुरा प्रोक्तं नारदेन च धीमता।**
**तत्सर्वं सम्प्रवक्ष्यामि हरिध्यानपुरःसरम्॥८॥**

**तापत्रयाग्निशमनं सर्वाघौघनिकृन्तनम्।**
**दारिद्र्यदुःखशमनं सर्वसम्पत्करं शिवम्॥९॥**

विज्ञानफलदं दिव्यं मोक्षैकफलसाधनम्।
नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम्।।१०।।

अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे।
स्मरेत्कल्पतरोर्मूले रत्नसिंहासनं शुभम्।।११।।

तन्मध्येऽष्टदलं पद्मं नानारत्नैश्च वेष्टितम्।
स्मरेन्मध्ये दशरथिं सहस्रादित्यतेजसम्।।१२।।

पितुरङ्कगतं राममिन्द्रनीलमणिप्रभम्।
कोमलाङ्गं विशालाक्षं विद्युद्वर्णाम्बरावृतम्।।१३।।

भानुकोटिप्रतीकाश किरीटेन विराजितम्।
रत्नग्रैवेयकेयूर रत्न कुण्डलमण्डितम्।।१४।।

रत्नकङ्कणमञ्जीर कटिसूत्रैरलंकृतम्।
श्रीवत्सकौस्तुभोरस्कं मुक्ताहारोपशोभितम्।।१५।।

दिव्यरत्नसमायुक्तं मुद्रिकाभिरलंकृतम्।
राघवं द्विभुजं बालं राममीषत्स्मिताननम्।।१६।।

तुलसीकुन्दमन्दार पुष्पमाल्यैरलंकृतम्।
कर्पूरागुरुकस्तूरी दिव्यगन्धानुलेपनम्।।१७।।

योगशास्त्रेष्वभिरतं योगेशं योगदायकम्।
सदा भरतसौमित्रशत्रुघ्नैरुपशोभितम्।।१८।।

विद्याधरसुराधीश सिद्धगन्धर्वकिन्नरैः।
योगीन्द्रैर्नारदाद्यैश्च स्तूयमानमहर्निशम्।।१९।।

विश्वामित्रवसिष्ठादिमुनिभिः परिसेवितम्।
सनकादिमुनिश्रेष्ठैर्योगिवृन्दैश्च सेवितम्।।२०।।

रामं रघुवरं वीरं धनुर्वेदविशारदम्।
मङ्गलायतनं देवं रामं राजीवलोचनम्॥२१॥

सर्वशास्त्रार्थतत्त्वज्ञम् आनन्दकरसुन्दरम्।
कौसल्यानन्दनं रामं धनुर्बाणधरं हरिम्॥२२॥

एवं संचिन्तयन् विष्णुं यज्ज्योतिरमलं विभुम्।
प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः॥२३॥

सर्वलोकहितार्थाय तुष्टाव रघुनन्दनम्।
कृताञ्जलिपुटो भूत्वा चिन्तयन्नद्भुतं हरिम्॥२४॥

यदेकं यत्परं नित्यं यदनन्तं चिदात्मकम्।
यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम्॥२५॥

विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम्।
श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि॥२६॥

कविं पुराणं पुरुषं पुरस्तात् सनातनं योगिनमीशितारम्।
अणोरणीयांसमनन्तवीर्यं प्राणेश्वरं राममसौ ददर्श॥२७॥

श्री नारद उवाच

नारायणं जगन्नाथमभिरामं जगत्पतिम्।
कविं पुराणं वागीशं रामं दशरथात्मजम्॥२८॥

राजराजं रघुवरं कौसल्यानन्दवर्धनम्।
भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम्॥२९॥

सत्यं सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम्।
सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम्॥३०॥

आदित्यं रविमीशानं घृणिं सूर्यमनामयम्।
आनन्दरूपिणं सौम्यं राघवं करुणामयम्॥३१॥

जामदग्निं तपोमूर्तिं रामं परशुधारिणम्।
वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम्।।३२।।

श्रीशार्ङ्गधारिणं रामं चिन्मयानन्दविग्रहम्।
हलधृग्विष्णुमीशानं बलरामं कृपानिधिम्।।३३।।

श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम्।
मत्स्यकूर्मवराहादि रूपधारिणमव्ययम्।।३४।।

वासुदेवं जगद्योनिमनादिनिधनंहरिम्।
गोविन्दं गोपतिं विष्णुं गोपीजनमनोहरम्।।३५।।

गोगोपालपरीवारं गोपकन्यासमावृतम्।
विद्युत्पुञ्जप्रतीकाशं रामं कृष्णं जगन्मयम्।।३६।।

गोगोपिकासमाकीर्णं वेणुवादनतत्परम्।
कामरूपं कलावन्तं कामिनीकामदं विभुम्।।३७।।

मन्मथं मथुरानाथं माधवं मकरध्वजम्।
श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम्।।३८।।

भूतेशं भूपतिं भद्रं विभूतिं भूमिभूषणम्।
सर्वदुःखहरं वीरं दुष्टदानववैरिणम्।।३९।।

श्रीनृसिंहं महाबाहुं महान्तं दीप्ततेजसम्।
चिदानन्दमयं नित्यं प्रणवं ज्योतिरूपिणम्।।४०।।

आदित्यमण्डलगतं निश्चितार्थस्वरूपिणम्।
भक्तिप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम्।।४१।।

कौसल्येयं कलामूर्तिं काकुत्स्थं कमलाप्रियम्।
सिंहासने समासीनं नित्यव्रतमकल्मषम्।।४२।।

विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम्।
यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम्।।४३।।

सत्यसन्धं जितक्रोधं शरणागतवत्सलम्।
सर्वक्लेशापहरणं विभीषणवरप्रदम्।।४४।।

दशग्रीवहरं रौद्रं केशवं केशिमर्दनम्।
वालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम्।।४५।।

नरवानरदेवैश्च सेवितं हनुमत्प्रियम्।
शुद्धं सूक्ष्मं परं शान्तं तारकं ब्रह्मरूपिणम्।।४६।।

सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम्।
सर्वकारणकर्तारं निदानं प्रकृतेः परम्।।४७।।

निरामयं निराभासं निरवद्यं निरञ्जनम्।
नित्यानन्दं निराकारमद्वैतं तमसः परम्।।४८।।

परात्परतरं तत्त्वं सत्यानन्दं चिदात्मकम्।
मनसा शिरसा नित्यं प्रणमामि रघूत्तमम्।।४९।।

सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम्।
नमामि पुण्डरीकाक्षममेयं गुरुतत्परम्।।५०।।

नमोऽस्तु वासुदेवाय ज्योतिषां पतये नमः।
नमोऽस्तु रामदेवाय जगदानन्दरूपिणे।।५१।।

नमो वेदान्तनिष्ठाय योगिने ब्रह्मवादिने।
मायामयनिरासाय प्रपन्नजनसेविने।।५२।।

वन्दामहे महेशानचण्डकोदण्डखण्डनम्।
जानकीहृदयानन्दवर्धनं रघुनन्दनम्।।५३।।

उत्फुल्लामलकोमलोत्पलदलश्यामाय रामाय तेऽ
कामाय प्रमदामनोहरगुणग्रामाय रामात्मने।
योगारूढ़मुनीन्द्रमानससरोहंसाय संसारवि–
ध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः।।५४।।

भवोद्भवं वेदविदां वरिष्ठमादित्यचन्द्रानलसुप्रभावम्।
सर्वात्मकं सर्वगतस्वरूपं नमामि रामं तमसः परस्तात्।।५५।।

निरञ्जनं निष्प्रतिमं निरीहं निराश्रयं निष्कलमप्रपञ्चम्।
नित्यं ध्रुवं निर्विषयस्वरूपं निरन्तरं राममहं भजामि।।५६।।

भवाब्धिपोतं भरताग्रजं तं भक्तिप्रियं भानुकुलप्रदीपम्।
भूतत्रिनाथं भुवनाधिपं तं भजामि रामं भवरोगवैद्यम्।।५७।।

सर्वाधिपत्यं समराङ्गधीरं सत्यं चिदानन्दमयस्वरूपम्।
सत्यं शिवं शान्तिमयं शरण्यं सनातनं राममहं भजामि।।५८।।

कार्यक्रियाकारणमप्रमेयं कविं पुराणं कमलायताक्षम्।
कुमारवेद्यं करुणामयं तं कल्पद्रुमं राममहं भजामि।।५९।।

त्रैलोक्यनाथं सरसीरुहाक्षं दयानिधिं द्वन्द्वविनाशहेतुम्।
महाबलं वेदनिधिं सुरेशं सनातनं राममहं भजामि।।६०।।

वेदान्तवेद्यं कविमीशितारमनादिमध्यान्तमचिन्त्यमाद्यम्।
अगोचरं निर्मलमेकरूपं नमामि रामं तमसः परस्तात्।।६१।।

अशेषवेदात्मकमादिसंज्ञमजं हरिं विष्णुमनन्तमाद्यम्।
अपारसंवित्सुखमेकरूपं परात्परं राममहं भजामि।।६२।।

तत्त्वस्वरूपं पुरुषं पुराणं स्वतेजसा पूरितविश्वमेकम्।
राजाधिराजं रविमण्डलस्थं विश्वेश्वरं राममहं भजामि।।६३।।

लोकाभिरामं रघुवंशनाथं हरिं चिदानन्दमयं मुकुन्दम्।
अशेषविद्याधिपतिं कवीन्द्रं नमामि रामं तमसः परस्तात्।।६४।।

योगीन्द्रसङ्घैश्च सुसेव्यमानं नारायणं निर्मलमादिदेवम्।
नतोऽस्मि नित्यं जगदेकनाथमादित्यवर्णं तमसः परस्तात्।।६५।।

विभूतिदं विश्वसृजं विरामं राजेन्द्रमीशं रघुवंशनाथम्।
अचिन्त्यमव्यक्तमनन्तमूर्तिं ज्योतिर्मयं राममहं भजामि।।६६।।

अशेषसंसारविहारहीनमादित्यगं पूर्णसुखाभिरामम्।
समस्तसाक्षिं तमसः परस्तान्नारायणं विष्णुमहं भजामि।।६७।।

मुनीन्द्रगुह्यं परिपूर्णकामं कलानिधिं कल्मषनाशहेतुम्।
परात्परं यत्परमं पवित्रं नमामि रामं महतो महान्तम्।।६८।।

ब्रह्मा विष्णुश्च रुद्रश्च देवेन्द्रो देवतास्तथा।
आदित्यादिग्रहाश्चैव त्वमेव रघुनन्दन।।६९।।

तापसा ऋषयः सिद्धाः साध्याश्च मरुतस्तथा।
विप्रा वेदास्तथा यज्ञाः पुराणं धर्मसंहिताः।।७०।।

वर्णाश्रमास्तथा धर्मा वर्णधर्मास्तथैव च।
यक्षराक्षसगन्धर्वा दिक्पाला दिग्गजादयः।।७१।।

सनकादिमुनिश्रेष्ठास्त्वमेव रघुपुंगव।
वासवोऽष्टौ त्रयः काला रुद्रा एकादश स्मृताः।।७२।।

तारकाः दश दिक् चैव त्वमेव रघुनन्दन।
सप्तद्वीपाः समुद्राश्च नगाः नद्यस्तथा द्रुमाः।।७३।।

स्थावराः जङ्गमाश्चैव त्वमेव रघुनायक।
देवतिर्यङ्मनुष्याणां दानवानां तथैव च।।७४।।

माता पिता तथा भ्राता त्वमेव रघुवल्लभ।
सर्वेषां त्वं परं ब्रह्म त्वन्मयं सर्वमेव हि।।७५।।

त्वमक्षरं परं ज्योतिस्त्वमेव पुरुषोत्तम।
त्वमेव तारकं ब्रह्म त्वत्तोऽन्यन्नैव किञ्चन।।७६।।

शान्तं सर्वगतं सूक्ष्मं परं ब्रह्म सनातनम्।
राजीवलोचनं रामं प्रणमामि जगत्पतिम्।।७७।।

ततः प्रसन्नः श्रीरामः प्रोवाच मुनिपुंगवम्।
तुष्टोऽस्मि मुनिशार्दूल वृणीष्व वरमुत्तमम्।।७८।।

नारद उवाच

यदि तुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे।
त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहं च सर्वदा।।७९।।

धन्योऽहं कृतकृत्योऽहं पुण्योऽहं पुरुषोत्तम।
अद्य मे सफलं जन्म जीवितं सफलं च मे।।८०।।

अद्य मे सफलं ज्ञानमद्य मे सफलं तपः।
अद्य मे सफलं कर्म त्वत्पादाम्भोजदर्शनात्।।८१।।

अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा।।
त्वत्पादाम्भोरुहद्वन्द्वसद्भक्तिं देहि राघव।।८२।।

ततः परमसम्प्रीतः स रामः प्राह नारदम्।
मेघगम्भीरया वाचा धन्वी विजितमन्मथः।।८३।।

श्रीराम उवाच

मुनिवर्य महाभाग मुने त्विष्टं ददामि ते।
यत्त्वया चेप्सितं सर्वं मनसा तद् भविष्यति।।८४।।

वरं न याचे रघुनाथ युष्मत्पादाब्जभक्तिः सततं ममास्तु।
इदं प्रियं नाथ वरं प्रयच्छ पुनः पुनस्त्वामिदमेव याचे।।८५।।

व्यास उवाच

इत्येवमीडितो रामः प्रादात् तस्मै वरान्तरम्।
वीरो रामो महातेजाः सच्चिदानन्दविग्रहः।।८६।।

अद्वैतममलं ज्ञानं स्वनामस्मरणं तथा।
अन्तर्दधौ जगन्नाथः पुरतस्तस्य राघवः।।८७।।

इति श्रीरघुनाथस्य स्तवराजमनुत्तमम्।
सर्वसौभाग्यसम्पत्तिदायकं मुक्तिदं शुभम्।।८८।।

कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम्।
गुह्याद्गुह्यतमं दिव्यं तव स्नेहात्प्रकीर्तितम्।।८९।।

यः पठेच्छृणुयाद्वापि त्रिसंध्यं श्रद्धयान्वितः।
ब्रह्महत्यादिपापानि तत्समानि बहूनि च।।९०।।

स्वर्णस्तेयं सुरापानं गुरुतल्पगतिस्तथा।
गोवधाद्युपपापानि अनृतात्सम्भवानि च।।९१।।

सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः।
मानसं वाचिकं पापं कर्मणा समुपार्जितम्।।९२।।

श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम्।
इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते।।९३।।

रामः सत्यं परं ब्रह्म रामात् किंचिन्न विद्यते।
तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत्।।९४।।

श्रीरामचन्द्र रघुपुंगव राजवर्य
राजेन्द्र राम रघुनायक राघवेश।
राजाधिराज रघुनन्दन रामचन्द्र
दासोऽहमद्य भवतः शरणागतोऽस्मि।।९५।।

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम्।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम्।।९६।।

रामं रत्नकिरीटकुण्डलयुतं केयूरहारान्वितं
सीतालंकृतवामभागममलं सिंहासनस्थं विभुम्।
सुग्रीवादिहरीश्वरैः सुरगणैः संसेव्यमानं सदा
विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुम्।।९७।।

सकलगुणनिधानं योगिभिः स्तूयमानं
भुजविजितसमानं राक्षसेन्द्रादिमानम्।
महितनृपभयानं सीतया शोभमानं
स्मर हृदयविमानं ब्रह्म रामाभिधानम्।।९८।।

रघुवर तव मूर्तिर्मामके मानसाब्जे
नरकगतिहरं ते नामधेयं मुखे मे।
अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे
भवजलनिधिमग्नं रक्ष मामार्तबन्धो।।९९।।

रामरत्नमहं वन्दे चित्रकूटपतिं हरिम्।
कौसल्याशुक्तिसम्भूतं जानकीकण्ठभूषणम्।।१००।।

इति श्रीसनत्कुमारसंहितायां नारदोक्तं श्रीरामचन्द्रस्तवराजस्तोत्रं सम्पूर्णम्।

❋❋❋❋❋

# ।। मंगलाचरणम् ।।

(१)

**मङ्गल्यौ मङ्गलाढ्यान् समनुविदधतौ भक्तसारङ्गवर्यान्**
**सानन्दं नर्तयन्तौ स्वतनुमतिमतां हृन्मयूरान् मनोज्ञौ।**
**पापं तापं हरन्तावनिशमथ सतां प्रीणयन्तौ प्रपन्नान्**
**सीतारामाभिधौ मे सुखमधिवसतां विद्युदब्दौ मनः खम्।।**

**भाष्य के मंगलाचरण का हिन्दी अनुवाद :—**

भाष्यकार, निर्विघ्नतापूर्वक ग्रन्थ समाप्ति की कामना करते हुए अपने इष्ट देवता श्री सीतारामजी का स्मरण कर रहे हैं—

संसार का मंगल ही जिनका प्रयोजन है और जो अपने भक्तरूप चातकों को सदैव मंगलयुक्त करते रहते हैं तथा जो अपनी उपस्थिति से आह्लादित होते हुए एवं अपने ही श्रीविग्रहों में बुद्धि लगाए हुए परम विरक्त महात्माओं के मनरूप मयूरों को नचाते रहते हैं, जो दिन रात सन्तों के पाप एवं ताप को हरण करते हुए अपने शरणागतों का पालन पोषण करते रहते हैं ऐसे श्री सीताराम नाम वाले विद्युत् एवं वर्षाकालीन मेघ मेरे मन आकाश में सुखपूर्वक सदा निवास करते रहें।

**विशेष:—** इस स्रग्धरा छन्द में रूपक अलंकार के द्वारा श्रीसीताजी को बिजली तथा श्रीरामजी को बादल से रूपित किया गया है। तात्पर्य यह है कि सामान्य बिजली और मेघ आकाश में नहीं रहते, परन्तु श्रीसीताराम जी एक विशिष्ट विद्युत् और मेघ हैं इनसे कवि ने प्रकाश और कृपासुधा वर्षा की अपेक्षा की है।

**श्रीराघवकृपाभाष्यं संस्कृतेन मया कृतम्।**
**श्रीरामस्तवराजस्य भाषायां तदनूद्यते।।**

अब श्री रामस्तवराज पर अपने द्वारा ही संस्कृत में प्रणीत श्री राघवकृपाभाष्य का सामान्य लोगों की सुविधा के लिए मैं हिन्दी अनुवाद भी प्रस्तुत कर रहा हूँ, जिससे सामान्य लोग भी श्रीरामस्तवराज के गंभीर भावों को सरलता से समझ सकें।

(२)

**श्रीमन्मैथिलराजराजतनयां वन्द्यां जगन्मातरम्**
**भौमीं भूमिभरापहारिरमणीं कारुण्यकल्लोलिनीम्।**
**ब्रह्माणीगिरिजारमादिमहितां श्री वैष्णवानां सता–**
**माचार्यां, प्रथमां तडिन्मयतनुं सीतां श्रये श्रेयसे।।**

परमवन्दनीया, जगन्माता, पृथ्वीकन्या, पृथ्वी के भारहर्त्ता श्रीराम की पत्नी, करुणा की साक्षात् महासरिता, ब्रह्माणी लक्ष्मी तथा पार्वती से भी पूजित श्री रामानन्दीय श्रीवैष्णव महानुभावों की सर्वप्रथम आचार्या, बिजली के समान गौरवर्णा, ऐसी मिथिलाधिराज जनक की पुत्री भगवती सीताजी को जगत्कल्याण के लिए मैं श्रयण करता हूँ अर्थात् मैं भगवती सीताजी की शरणागति स्वीकार करता हूँ जिससे वे मेरा और श्रीरामस्तवराज पढ़नेवालों का कल्याण करें।

(३)

**तमालतरणिप्रसूजलजलालजम्बूरुचम्**
**हरन्तमनघं हरिं तमिहराममात्मम्भरिः।**
**दशास्यहरमीश्वरं धृतधनुश्शरं श्रीवरम्**
**भवाम्बुनिधिवाडवं मनसि भावये राघवम्।।**

तमालवृक्ष, यमुनाजल, नीलकमल, बादल तथा जामुन के फल की शोभा को अपने श्रीविग्रह से चुराते हुए, निष्पाप, रावण के शत्रु, परमेश्वर, धनुर्बाणधारी, सीतापति, संसारसागर को सोखने के लिए वडवानल के समान ऐसे रघुकुल में उत्पन्न परब्रह्म श्रीराम की उन्हीं के गुण गाकर अपना पेट भरने वाला मैं अपने मन की भावना कर रहा हूँ अर्थात् उनका चिन्तन कर रहा हूँ।

(४)

**जयत्वसुरवल्लभा जठरजाब्जकञ्जप्रसू–**
**प्रसूप्रसवधर्मभृद्धरक धैर्यभूभृत् पविः।**
**परश्रवण शष्कुलीदलनचुञ्चुचञ्चद्रवा**
**प्रमोदितमहीमहाहनुमतो महाहुंकृतिः।।**

असुर नारियों के गर्भ के शिशुरूप कमल के लिए जो ब्रह्मपुत्र अत्रि के श्रेष्ठ पुत्र चन्द्र के समान है अर्थात् जैसे शीतकालीन चन्द्रमा कमल कुल को नष्ट कर देता है उसी प्रकार जो अपने गर्जन से असुर नारियों के गर्भ शिशुओं को नष्ट कर डालती है, जो भगवान् शंकर के सुख एवं सिर प्राप्त करने वाले रावण के धैर्यरूप पर्वत को नष्ट करने के लिये वज्र के समान है एवं जो शत्रुओं के कान के परदों को फाड़ देने में कुशल भयंकर झंकार से सम्पन्न है ऐसी पृथ्वी को भी आनन्द देने वाली भगवती भूमितनया सीताजी को प्रसन्न करने में निपुण अञ्जनानन्दवर्धन श्री हनुमानजी की भयंकर हुंकृति अर्थात् हाँक की जय हो।

**विशेषः**—श्री हनुमानजी की हाँक के सम्बन्ध में मानस सुन्दरकाण्ड में गोस्वामीजी कहते हैं—

**चलत महाधुनि गरजेसि भारी।**
**गर्भ स्रवहिं सुनि निसिचर नारी।।** (मानस ५-२८-१)

लंकाकाण्ड में भी, हनुमानजी की हाँक से राक्षसों का पलायन वर्णन प्रसिद्ध है—

**हनुमान अंगद रन गाजे।**
**हाँक सुनत रजनीचर भाजे।।** (मानस ६-४७-७)

श्री हनुमानबाहुक की १२-१३ घनाक्षरी में भी गोस्वामीजी ने हनुमानजी की हाँक का वर्णन किया है,

**सब दिन रूरो पूरो जहाँ तहाँ ताहि**
**जाके है भरोसो हिये हनुमान हाँक को।।**
**बालक ज्यों पालिहैं कृपालु मुनि सिद्ध ताहिं**
**जाके हिय हुलसति हाँक हनुमान की।।**

तुलसीदास जी ने हनुमानजी की हाँक को महाधुनि की संज्ञा दी है **"ताहि निपाति महाधुनि गरजा"** (मानस५-१८-८)

वाल्मीकि रामायण के अनुसार हनुमानजी की हाँक इस प्रकार है—

**जयत्यतिबलो रामो लक्ष्मणश्च महाबलः।**
**राजा जयति सुग्रीवो राघवेणाभिपालितः।।**
**दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः।**
**हनूमाञ्छत्रुसैन्यानां निहन्ता मारुतात्मजः।।**
**न रावणसहस्रं मे युद्धे प्रतिबलं भवेत्।**
**शिलाभिश्चप्रहर्तः पादपैश्च सहस्रशः।।**
**अर्दयित्वा पुरीं लंकामभिवाद्य च मैथिलीम्।**
**समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम्।।**

अर्थात् अत्यन्त बलशाली भगवान् श्रीराम की जय हो। महाबलशाली श्रीलक्ष्मणलाल की जय हो। श्रीराघवसरकार के द्वारा पालित महाराज सुग्रीव की जय हो। मैं शत्रु सेनाओं का नाशक पवनपुत्र अक्लिष्टकर्मा भगवान् श्रीराम का दास हूँ। मेरा नाम हनुमान है मैं सभी राक्षसों के देखते-देखते सारी लंकापुरी को धूलि में मिलाकर भगवती सीता को प्रणाम करके जाम्बवान द्वारा आदेशित अपना पूरा कार्य करके सुखपूर्वक श्रीराम के पास लौट जाऊँगा।

(५)

**नारं ददातु भगवान् द्यतु मे स नारम्**
**श्री नारदो विमलबोध विशारदो वै।**
**दिव्यं यदाननविधोः स्तवराजसोमम्**
**तृप्तिं न गच्छति पिबन्नपि रामचन्द्रः।।**

जिनके मुखचन्द्र से प्रकट हुए श्रीरामस्तवराजरूप अमृत को पीते हुए भगवान् श्रीरामचन्द्र भी तृप्ति को नहीं प्राप्त होते अर्थात् स्वयं सिद्ध सुधाकर को भी जिसकी सुधा की ललक लगी रहती है ऐसे विमल वेदान्त विज्ञान के विशारद भगवान् नारद मुझे दिव्य रामपरत्व का ज्ञान दें और मेरे अज्ञान को दूर कर दें।

**विशेषः—** यहाँ "नार" शब्द दो अर्थों में प्रयुक्त है-नारं ज्ञानं ददाति इति नारदः और नारं अज्ञानं द्यति खण्डयति इति नारदः।

(६)

**यो रामभद्रस्तवराजमेतद् ददर्श देवर्षिकृतं कृतार्थः।**
**तं राघवस्य प्रथमावतारं भक्त्या नमस्यामि सनत्कुमारम्।।**

भगवान् नारद द्वारा रचित एवं स्तुतिरूप में प्रस्तुत किये हुए श्री रामस्तवराज का दर्शन करके जो कृतार्थ हुए और वेदव्यास को उपदेश किया, ऐसे भगवान् श्रीराम के प्रथम अवतार ब्रह्मर्षि श्री सनत्कुमार को मैं भक्तिपूर्वक नमस्कार करता हूँ।

(७)

**व्यास्यद्वेदतरुं हिताय जगतां शाखाशतैर्यो व्यधात्**
**वेदान्तं सपुराणभारतमयं, यः श्लोकलक्षेषुमत्।**
**श्री रामस्तवराजरूपममृतं योऽपीपयत् पाण्डवम्**
**तं पाराशर पुण्यपार्वणविधुं श्रीव्यासदेवं भजे।।**

जिन्होंने जगत् का हित करने के लिए वेदरूप वृक्षकी एक हजार एक सौ सैंतीस शाखाओं का निर्माण करके उसका विस्तार किया अर्थात् सामवेद में एक हजार शाखा, यजुर्वेद में एक सौ एक शाखा, ऋग्वेद में इक्कीस शाखा और अथर्ववेद में पन्द्रह शाखाओं की व्यवस्था करके व्यास पद्धति से वेद को सर्वसुलभ कर डाला तथा जिन्होंने वेदान्तदर्शन कर निर्माण किया एवं एक लाख श्लोकों में महाभारत और चार लाख श्लोकों में अठारह पुराणों की रचना की एवं जिन्होंने धर्मराज युधिष्ठिर को श्रीरामस्तवराजरूप सुधा का पान कराया। ऐसे महर्षि पाराशर के पुण्यरूप क्षीरसागर से प्रगट हुए पूर्णिमा के चन्द्रस्वरूप श्री वेदव्यासदेव को मैं भजता हूँ।

(८)

**प्रयागे सद्यागे त्रिसरिति विभागे यमनघम्,**
**सुशीला शंशीला प्रजनितवती पुण्यसदनात्।**
**तमार्यं स्वाचार्यं द्विजवरमनार्यैकदमनम्,**
**गुरु रामानन्दं नमत जगतां रामजनुषम्।।**

श्रेष्ठयज्ञों से सम्पन्न विचित्र विभागों से युक्त गंगा, यमुना, सरस्वती की धाराओं से पवित्र ऐसे तीर्थराज प्रयाग में जिन निष्पाप ब्राह्मण श्रेष्ठ

को कल्याणशीला भगवती सुशीला माँ ने श्री पुण्यसदन शर्मा को निमित्त बनाकर बालक रूप में जन्म दिया, उन्हीं आर्य चरित्र वाले, अनार्यों के एकमात्र दण्डदाता भगवान् श्रीराम के ज्ञानावतार अपने आचार्य जगद्गुरु श्रीमदाद्यरामानन्दाचार्य को आप सभी सनातनधर्मावलम्बी तथा श्री रामानन्दी श्रीवैष्णव महानुभाव मेरे साथ नमन करें।

(९)

**श्रीरामसीताचरणारविन्द**
**प्रेमामृतेन्दुं प्रतिभैकसिन्धुम्।**
**प्रणौमि तं मानसराजहंसम्**
**दासं तुलस्यास्तनयं हुलस्याः॥**

श्रीसीतारामजी के चरणारविन्द के प्रेमरूप अमृत के चन्द्रमा एवं प्रतिभा के एकमात्र सागर, श्रीरामचरितमानस के राजहंस, हुलसीनन्दन श्री तुलसीदासजी महाराज को मैं प्रतीतिपूर्वक प्रणाम करता हूँ।

(१०)

**सद्गुरुमीश्वरदासं सेवे श्रीराममन्त्रदातारम्।**
**श्रीरामचरणदासं भक्त्या वेष्यं गुरुं वन्दे॥**

मैं षड़क्षर श्री राममन्त्र के दाता अपने दीक्षागुरु सद्गुरु देव साकेतवासी श्री श्री १००८ श्री ईश्वरदासजी महाराज की सतत मानसी सेवा करता हूँ। अनन्तर मैं भक्तिपूर्वक अपने विरक्तवेष देने वाले अपने शिक्षागुरु श्री श्री १००८ श्री साकेतवासी श्री रामचरणदासजी फलाहारी महाराज को भक्तिपूर्वक वन्दन करता हूँ।

(११)

**श्री रामस्तवराजप्रचारभावार्थ तत्वसन्देष्टा।**
**स जयति पारमहंसः सद्गुरुरणछोरदासो वै॥**

जिन्होंने श्री रामस्तवराज के प्रचार एवं इसके भावार्थ व्याख्यान के माध्यम से लाखों श्रीरामानन्दीय श्री वैष्णवों को उपकृत किया, ऐसे परमहंस परमरामभक्त श्री श्री १००८ श्री सद्गुरुदेव श्री रणछोड़दास जी महाराज की जय हो।

## ।। भूमिका भाष्यकारिका ।।

**श्रीराघवकृपाभाष्यं श्रीरामस्तवराजके।**
**श्रीरामभद्राचार्योऽहं भाषे भागवताशिषे।।१।।**

अब मैं जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य श्रीरामभक्तों से आशीर्वाद प्राप्त करने के लिए श्रीरामस्तवराज नामक स्तोत्र ग्रन्थ पर श्रीराधवकृपाभाष्य प्रस्तुत कर रहा हूँ।

**श्रीरामस्तवराजस्य विशिष्टाद्वैतमाधुरीम्।**
**श्रीराघवकृपाभाष्यसुधां पिबत वैष्णवाः।।२।।**

हे प्रिय श्रीवैष्णवमहानुभावो! अब मेरे ही साथ विशिष्टाद्वैत की माधुरी से युक्त श्रीरामस्तवराज पर प्रस्तुत की हुई श्रीराघवकृपाभाष्य सुधा का आदरपूर्वक आस्वादन करो।

**नैव रागान्न विद्वेषात् पक्षपातान्न च कचित्।**
**व्याख्याने स्तवराजस्य शुद्धः शास्त्रार्थसंग्रहः।।३।।**

इस श्रीरामस्तवराज के व्याख्यान में, मैं केवल शुद्ध शास्त्रार्थ का संग्रह प्रस्तुत कर रहा हूँ, यहाँ न मेरा किसी के प्रति राग है और न द्वेष और कहीं भी मेरा कोई पक्षपात नहीं है अर्थात् मेरा यह श्रीराघवकृपाभाष्य एक निष्पक्ष भगवदीय शास्त्रचर्चा है। जैसा कि गोस्वामी श्रीतुलसीदासजी ने भी कहा है–**इहाँ न पक्षपात कछु राखौं। वेद पुरान संत मत भाखौं।।**

**निश्वासो जानकीजाने र्वेदोऽयं निरुपद्रवः।**
**अपौरुषेयो नित्यश्च शब्दब्रह्मेति कीर्त्यते।।४।।**

भगवान् वेद श्रीसीतापति श्रीराम के निःश्वास हैं "जाके सहज स्वास श्रुति चारी" उनमें भ्रम, प्रमाद, स्वार्थ, श्रवण की अकुशलता आदि सामान्य पुरुषोचित दोष नहीं हैं इसीलिये इन्हें निरुपद्रव कहा जाता है। वेद अपौरुषेय हैं अर्थात् ये किसी पुरुष की रचना नहीं हैं ये नित्य अर्थात् अविनाशी हैं इन्हीं को शब्दब्रह्म भी कहा जाता है।

**पदस्वरानुशिष्टत्वान् मन्त्रभागो हि संहिता।**
**प्रायशो मुक्त एभ्यस्तु वेदो ब्राह्मण उच्यते।।५।।**

पद और स्वरों के अनुशासन में होने से वेद के मन्त्रभाग को संहिता कहा जाता है जो प्रायः इनसे मुक्त होता है उस वैदिक भाग को ब्राह्मण कहते हैं।

**मन्त्रब्राह्मणयोर्वेदनामधेयत्वमीयुषोः।**
**सर्वत्र रामचरितं तत्र तत्रोपलभ्यते।।६।।**

इस प्रकार वेद कहे जानेवाले मन्त्र एवं ब्राह्मण इन दोनों वैदिक भागों में भिन्न भिन्न मन्त्रों में सर्वत्र श्रीरामचरित उपलब्ध हो जाता है ।

**सीताया रामचन्द्रस्य तयोर्लीलाजुषामपि।**
**सन्ति वेदेषु नामानि तेषां सुचरितानि च।।७।।**

भगवती सीता एवं भगवान् श्रीराम तथा उनके लीलापरिकरों के भी नाम और चरित्र वेदों में उपलब्ध हो जाते हैं।

**श्रीसीतारामचरितं सर्ववेदेषु विद्यते।**
**सुस्पष्टं विस्तरभिया मया नैवात्र दर्श्यते।।८।।**

बहुत क्या कहूँ? श्रीसीतारामजी का मंगलमय चरित्र सभी वेदों में सुस्पष्टरूप में विद्यमान है। ग्रन्थ के विस्तारभय से मैं उसे यहाँ नहीं प्रस्तुत कर रहा हूँ। मेरे अन्य लेखों में वह द्रष्टव्य है।

**श्रीरामतापनीयाद्याः श्रुतयः सगुणं हरिम्।**
**श्रीरामं वर्णयामासुः सोत्सवं जानकीपतिम्।।९।।**

श्रीरामतापनीय आदि उपनिषद् की श्रुतियों ने श्री सीतापति भगवान् श्रीराम का सगुणसाकार रूप में बड़े ही समारोह से वर्णन किया है।

**यथा रामायणं प्राह वाल्मीकिर्वेदसंहितम्।**
**श्रीरामस्तवराजञ्च वेदसारं जगौ मुनिः।।१०।।**

जिस प्रकार महर्षि वाल्मीकि ने श्रीमद्रामायण को वेदतुल्य कहा है, "इदं पवित्रं पापघ्नं पुण्यं वेदैश्चसम्मितम्" (वा.रा.१-१-९८) इसी प्रकार कृष्णद्वैपायन वेदव्यासजी ने भी श्रीरामस्तवराज को वेद का उत्तम सार बताया है। "कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम्" (रामस्तवराज ८८)

**श्रीरामस्तवराजस्य यतो वेदार्थता मता।**
**तस्मादस्य विचारोऽपि वेदसिद्धान्ततो वरः।।११।।**

चूँकि श्रीरामस्तवराज सर्वसम्मति से वेद का अर्थ ही माना गया है इसलिए इस पर वैदिक सिद्धान्तों के अनुसार ही विचार करना उचित होगा।

**वेदान्तो वेदसिद्धान्तः सर्वपण्डितसम्मतः।**
**विशिष्टाद्वैतवादस्य तत्रापि निर्विवादिता।।१२।।**

सभी विद्वान् एक मत से वेदान्त को ही वेद का सिद्धान्त मानते हैं, उसमें भी विशिष्टाद्वैतवाद पूर्णरूप से निर्विवाद सिद्धान्त है।

**अशब्दमित्यादिगिरा निर्गुणं श्रुतयो जगुः।**
**सर्वगन्धादि वाक्यैस्तु काश्चित् तं सगुणं हरिम्।।१३।।**

किन्हीं श्रुतियों ने कठोपनिषद् के "अशब्दमस्पर्शम्" इत्यादि वाक्यों से ब्रह्म को निर्गुण निराकार कहा हैं। इन्हीं परमात्मा को किन्हीं श्रुतियों ने "सर्वगन्ध सर्वरसः" इत्यादि छान्दोग्य उपनिषद् के वचनों से सगुण साकार भी कहा है। इस प्रकार दोनों प्रकार की श्रुतियों का परस्पर विरोध उपस्थित हो जाता है।

**उभयासां श्रुतीनाञ्च द्वैताद्वैतसुसंयुजाम्।**
**विशिष्टाद्वैतवादेन विना नैवैकवाक्यता।।१४।।**

इस प्रकार द्वैत और अद्वैत सिद्धान्त को कहने वाली दोनों प्रकार की श्रुतियों की एकवाक्यता विशिष्टाद्वैतवाद के बिना सम्भव नहीं है।

**श्रीरामस्तवराजेऽपि दृश्यते चेत्थमेव हि।**
**क्वचिन्निर्गुणता देवे क्वचित् सगुणता हरौ।।१५।।**

श्रीरामस्तवराज में भी इसी प्रकार परस्पर विरोधी वाक्य दिखाई पड़ते हैं। कहीं निर्गुण निराकार का वर्णन तो कहीं सगुण साकार की स्तुति।

**कविं पुराणमित्यादि शब्दैः सगुणता स्फुटा।**
**अद्वैताद्यैस्तथा शब्दैः रामनिर्गुणतापि च।।१६।।**

"कविं पुराणम्" इत्यादि वाक्यों से एक ओर जहाँ भगवान नारद ने श्रीराम के सगुण साकार का वर्णन किया है, वहीं दूसरी ओर "नित्यानन्दं निराकार मद्वैतं तमसः परम्" इत्यादि शब्दों से भगवान् के निर्गुणरूप का भी वर्णन किया है।

**उभयोर्धर्मयोरेवं परस्परविरुद्धयोः।**
**विवादपरिहारार्थं विशिष्टाद्वैतमिष्यते।।१७।।**

इस प्रकार परस्पर विरुद्ध इन दोनों धर्मों अर्थात् निर्गुणत्व और सगुणत्व के परस्पर विवाद को दूर करने के लिए वेदों की ही भाँति वेदों के साररूप श्रीरामस्तवराज में भी विशिष्टाद्वैत सिद्धान्त को ही इष्ट मानना पड़ेगा।

**क्रौर्यादि दुर्गुणानाञ्च वर्जनान्निर्गुणो हरिः।**
**सगुणोऽपि स्मृतो रामो वात्सल्यादि ग्रहात् किल।।१८।।**

क्रूरता आदि दुर्गुणों के न होने से भगवान् को निर्गुण कहा जाता है और वात्सल्यादि कल्याणगुणगणों को स्वीकार करने से भगवान् श्रीराम सगुण कहते जाते हैं।

**कार्यकारणभेदेन ब्रह्म वै द्विविधं श्रुतम्।**
**कारणं परमव्योम्नि कार्यं जगदाश्रयम्।।१९।।**

कार्यकारण भेद से ब्रह्म दो प्रकार का है कारणब्रह्म परमव्योम अर्थात् साकेतलोक में श्रीसीतारामजी के रूप में विराजमान रहता है और कार्यब्रह्म जगत् में व्याप्त होकर उसका आश्रय बनता है।

**उभे अपि विशिष्टेस्तश्चिदचिद्भ्यां स्वभावतः।**
**विशिष्टयोस्तदद्वैतं विशिष्टाद्वैतमुच्यते।।२०।।**

कारण और कार्य ये दोनों ही ब्रह्म स्वभावतः चित् और अचित् से विशिष्ट हैं इन्हीं के अद्वैत अर्थात् एकत्व को विशिष्टाद्वैत कहते हैं। अतः "अद्वैतं तमसः परम्" (रामस्तवराज २८) में प्रयुक्त अद्वैत शब्द विशिष्टाद्वैत के अर्थ में है।

**चेतनाच्चिद् भवेज्जीवो ह्यचित् प्रकृतिरुच्यते।**
**शरीरत्वात् ब्रह्मणस्ते सर्वदैव विशेषणे।।२१।।**

चेतन होने से जीव को चित् कहते हैं और प्रकृति ही अचित् है ये दोनों भगवान् के शरीर होने के कारण सर्वदा ही विशेषण हैं।

**निर्विशेषं न च ब्रह्म सविशेषं सदैव तत्।**
**जीवो नित्यो हरेर्दासो व्याप्योऽणुर्माययाश्रितः।।२२।।**

ब्रह्म कभी निर्विशेष नहीं होता, वह सदैव सविशेष रहता है। जीव नित्य है, वह भगवान राम का दास है वह अणु व्याप्य और कभी कभी भजन न करने से माया के वश में भी हो जाता है।

**श्रीराघवकृपाभाष्ये स्तवराजे यथाश्रुतिः।**
**एतत् सर्वं प्रवक्ष्यामि रामप्रीत्यै प्रमाणतः।।२३।।**

श्रीरामस्तवराज पर किये जा रहे श्रीराघवकृपाभाष्य में प्रभु श्रीराम की प्रसन्नता के लिए मैं विशिष्टाद्वैत के उक्त सभी विषयों पर श्रुतियों के प्रमाण के साथ विचार करूँगा।

**क्वाहं मन्दमतिः क्वेदं स्तवराजविवेचनम्।**
**सीतारामकृपापोतस्तरिष्यामि महाम्बुधिम्।।२४।।**

कहाँ मैं अत्यन्त मन्दबुद्धिवाला जीव और कहाँ यह स्तवराज जैसे स्तोत्ररत्न का विवेचन। फिर भी श्री सीतारामजी की कृपारूप जहाज का अवलम्बन लेकर निश्चय ही मैं इस महासागर को पार कर लूँगा।

**नातिसंक्षिप्त दीर्घं च पौनरुक्त्यविवर्जितम्।**
**भाष्यं रामपरं सन्तः शीलयन्तु विमत्सराः।।२५।।**

यह श्रीराघवकृपाभाष्य न तो बहुत संक्षिप्त और न ही बहुत दीर्घ होगा। इसमें कहीं भी पुनरुक्ति नहीं होगी और इसमें पग पग पर श्री सीतारामजी के परत्व का प्रतिपादन होगा। हे सन्तो! आपश्री महानुभाव मत्सररहित होकर इसका अनुशीलन करें।

❊ ❊ ❊ ❊ ❊

# श्रीरामस्तवराजं प्रारभ्यते

ॐ अस्य श्रीरामस्तवराजस्तोत्रमन्त्रस्य श्रीसनत्कुमारऋषिः अनुष्टुप्छन्दः श्रीरामचन्द्रो देवता श्रीसीताबीजं श्रीहनुमानशक्तिः स्तवराजं कीलकं श्रीसीतारामप्रीत्यर्थे श्रीरामस्तवराजपाठे विनियोगः।

**श्रीराघवकृपाभाष्यम्—**

अथ भगवान् सनत्कुमारः सकललोकहितचिकीर्षया निजनिर्मित-संहितामध्ये स्वतपोज्ञानबलसमुपलब्धदिव्यचक्षु श्रीमद्देवर्षिनारदकृतं श्रीरामस्तवराजं साक्षात्कृत्य निर्विवेशयिषन् स्वेनैवोपदिष्टं वेदव्यासाय तमेव वेदव्यासयुधिष्ठिरसंवादं सूतमुखेनावतारयिष्यन् ततः पूर्वमागम-मर्यादासंरक्षणाय स्वयं सूतेनैव समपुदेशयति ऋष्यादिन्यासं विनियोगं च ओमित्यादिना। विनियोगो नाम ऋषिछन्दो देवताबीजशक्ति-कीलकस्मरणपूर्वकं प्रयोगलक्षस्य चिन्तनं तथा च स्मरन्ति आगमविदः। ऋषिच्छन्दो देवताश्च बीजशक्ती च कीलकं निमित्तं चिन्तयन् कर्म कुर्यात् तद् विनियोगकम् अर्थात् ऋष्यादीनां षण्णां स्मरणं कृत्वा कर्मनिमित्त-स्मरणपूर्वकं पाठादिकं विनियोजयन् साधकः सफलप्रयोगो भवति। स्तवाः देवताप्रसादनार्थं प्रस्तुतवाग्विशेषाः तेषु राजते सर्वविधिपूर्णत्वात् दीप्यमानं भवति इति स्तवराजम्। पचादित्वात् अच् प्रत्ययः।

यद्यपि सन्ति श्रीरामचन्द्रस्य बहवः स्तवाः किन्त्वयं सर्वान् अतिशेते। यतो ह्यस्य सनत्कुमारो भगवत्कलावतारऋषिः। अत्र भगवतः श्रीरामचन्द्रस्य सामग्र्येण नामरूपलीलाधाम्नां वर्णनम्। नाम्नो यथा—

**श्रीरामरामेति जना ये जपन्ति च सर्वदा।**
**तेषां भुक्तिश्च मुक्तिश्च भविष्यति न संशयः।।**
(श्रीरामस्तवराज-७)

रूपम् यथा–

**पितुरंकगतं राममिन्द्रनीलमणिप्रभम्।**
**कोमलाङ्गं विशालाक्षं विद्युद् वर्णाम्बरावृतम्।।**
(श्रीरामस्तवराज-१३)

लीला यथा–श्रीरामस्तवराज (४२ तः ४६ यावत) धाम यथा–

**अयोध्यानगरे रम्ये रत्नमण्डपमध्यगे।**
**स्मरेत् कल्पतरोर्मूले रत्नसिंहासनं शुभम्।।**
(श्रीरामस्तवराज-११)

किञ्च अस्मिन् स्तवराजे तत्तत् प्रसंगेषु पौनःपुण्येन श्रीरामस्य परत्व प्रतिपादनम्। सर्वावतारित्वं सर्वशेषित्वं सुस्पष्टं समुद्घोषितं तन्मया यथावसरं समुपबृंहयिष्यते। अतोऽप्यस्य सर्वोत्कृष्टत्वम्। शतश्लोक-मयत्वादपि सर्वातिशायित्वमस्य स्तवेशस्य। एवम्भूतस्यास्य श्रीरामस्तवराजस्य मन्त्ररूपत्वात् मननात् त्रायकत्वात् गोपनीयत्वाच्च भगवान् सनत्कुमारः ऋषिः साक्षात्कर्ता न तु निर्माता "ऋषयो मन्त्रद्रष्टारः" इत्यभियुक्तोक्तेः ऋषति पश्यति इति ऋषिः इति व्युत्पत्तेश्च। इत्यनेन वेदवदस्य रामस्तवराजस्यानादित्वमपौरुषेयत्वं चोक्तम्।

अनुष्टुप् छन्दः :– यद्यप्यत्र अनुष्टुभोऽतिरिक्तान्यपि सन्ति छन्दांसि तथा हि सप्तदश उपजातयः त्रीणि शार्दूलविक्रीडितानि द्वे मालिन्यौ एका वसन्ततिलका च, तथाप्यनुष्टुब्बहुलत्वात् प्रधानेव्यपदेशनियमाच्च अक्षराणां अनुष्टुप् छन्दसैव गणनापारम्पर्याच्च अनुष्टुप्छन्द इति संगतम्। अस्य स्तुतिविषयीभूतदेवताभगवान् श्रीराम एव तस्यैव परमतत्व परमजाप- परमध्यानविषयतया युधिष्ठिरप्रश्नोत्तरक्रमेण वेदव्यासेन वक्ष्यमाणत्वात् अस्य ग्रन्थस्य रामायणवत् भगवती सीतैव मूलकारणम् तस्या एव श्रीरामाह्लादिनीत्वेन प्रसिद्धत्वात् नायिकात्वाच्च भगवतः। यथा अत्रैव नारदो वक्ष्यति–

**सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम्** (श्रीरामस्तवराज-५०)

चरमे श्रीसूतोऽपि "जानकीकण्ठभूषणम्" ध्यानेऽपि "वैदेहीसहितम्" एवं महर्षिवाल्मीकिरपि सम्पूर्णरामायणं श्रीसीताचरित-प्रधानत्वेनैव प्रतिजानीते "कृत्स्नं रामायणं काव्यं सीतायाश्चरितं महत्" किञ्च श्रीरामोपासनापरम्परायाः प्रथमाचार्यत्वाच्छ्रीसीतायाः श्रीरामस्तव-राजस्य च प्राणभूतत्वाद्रामोपासकानां सीतायाः बीजत्वं समुचितमेव।

श्रीरामोपासनायां तदुपासकेषु च हनुमतैव शक्तिदानात् अस्य हनुमानेव शक्तिः, कीलयति विघ्नान् निवारयति इति कीलकं पचादित्वात्

अच्, स्वार्थे कन् प्रत्ययश्च। स्तवराजस्य सकलस्तोत्रचूडामणित्वात् स्वस्य स्वेनैव विघ्ननिवारकत्वोपपत्तेः स्वयं स्तवराजमेव स्वस्य कीलकं विघ्ननिवारकोपकरणम्। स्तवराजस्य चरमांशे माहात्म्यवर्णनप्रकरणे भगवता व्यासेन ब्रह्महत्यादिपापानां गोवधाद्युपपापानाञ्च स्तवराजपाठ–श्रवणाभ्यां निरसनस्य पञ्चश्लोक्या वर्णितत्वात् ''यः पठेत्'' इत्यारभ्य ''सत्यं सत्यमिदं जगत्'' इत्यन्तया।

**''प्रयोजनमनुदिश्य न मन्दोऽपि प्रवर्तते''**

अतः पाठविनियोगे केनचित् विशेषप्रयोजनेन भवितव्यम् इत्यत आह–श्रीसीतारामप्रीत्यर्थे, प्रीतिः प्रसन्नता श्रीरामस्य प्रसन्नतैव अस्य पाठविनियोगस्य परमं प्रयोजनम्। परमेश्वरे प्रसन्ने सर्वेषां मनोरथानां स्वत एव पूर्तिः श्रवणात् स्मरणात् दर्शनाच्च।

''नारायणं जगन्नाथं'' इत्यारब्धेन'' ''प्रणमामि पुनः पुनः'' इत्यन्तेन श्रीनारदेन स्तुतस्य श्रीरामस्य प्रसन्नतासूचनस्य अत्रैव वक्ष्यमाणत्वात् ''ततः प्रसन्नः श्रीरामः प्रोवाच मुनिसत्तमम्'' (श्रीरामस्तवराज ७८) एवं अनेन अङ्गन्यासकरन्यासावपि।

**यथा–सनत्कुमारऋषये नमः हृदये। अनुष्टुप् छन्दसे शिरसे स्वाहा। श्रीरामचन्द्रदेवतायै शिखायै वषट्। सीताबीजाय नमः। कवचाय हुम्। हनुमत् शक्तये। नमः नेत्राभ्यां वौषट्। स्तवराजकीलकाय नमः अस्त्राय फट्। सनत्कुमारऋषये अंगुष्ठाभ्यां नमः। अनुष्टप्छन्दसे तर्जनीभ्यां नमः। श्रीरामचन्द्रदेवतायै मध्यमाभ्यां नमः। सीताबीजाय अनामिकाभ्यां नमः। हनुमच्छक्तये कनिष्ठिकाभ्यां नमः। स्तवराजकीलकाय करतलकरपृष्ठाभ्यां नमः।**

एवं 'वैदेहीसहितं' इत्यादिना 'अयोध्यानगरे रम्ये' इत्यादिना वा ध्यानम्। इत्थं प्रातः सन्ध्यादिकं विधाय षट्सहस्रं सहस्रं वा श्रीराममन्त्रराजतारकं जप्त्वा विनियोगऋष्यादिन्यासध्यानपूर्वक श्रीरामस्तवराजस्य पाठं कृत्वैव साधकः साधिका च श्रीराममन्त्रराजजपफलं श्रीसीतारामकृपाप्रसादं लभत एव इति श्रीरामानन्दीय श्रीवैष्णवसम्प्रदायः, इत्येव च कृतभगवत्साक्षात्काराः श्रीमद् ईश्वरदास श्रीगंगादास श्रीसद्गुरु

रणछोड़दासप्रभृतयः सिद्धा वृद्धाश्च महात्मानो वयं च॥श्री॥

**श्रीराघवकृपाभाष्य**–अब श्रीरामस्तवराज का प्रारम्भ करते हैं–

इस श्रीरामस्तवराज स्तोत्र मन्त्र के श्री सनत्कुमार ऋषि द्रष्टा हैं अर्थात् सनत्कुमार जी ने इसका साक्षात्कार किया है। इस मंत्र का छन्द अनुष्टुप् है इस स्तवराज के देवता भगवान् श्रीरामचन्द्र हैं। भगवती सीता ही इसका बीज अर्थात् कारण हैं। श्री हनुमान जी इसकी शक्ति हैं। स्तवराज स्वयं स्वयं का कीलक है। श्रीसीतारामजी की प्रसन्नता के लिए पाठ में श्रीरामस्तवराज का विनियोग किया जाता है।

यह श्रीराम की स्तुतियों में सर्वश्रेष्ठ है। स्तवेषु राजते अर्थात् सभी स्तुतियों के बीच में यह अधिक प्रकाशमान रहता है। इसलिए इसे स्तवराज कहते हैं। कोई 'स्तवानां राजा स्तवराजः' यह व्युत्पत्ति करके समासान्त टच् प्रत्यय करने की भूल न करे। क्योंकि उस परिस्थिति में इसका पुल्लिंग में प्रयोग होता जब कि मूलकार ने 'स्तवराजं पुरा प्रोक्तम्' इसे नपुंसकलिंग में ही स्वीकार किया है। इसमें भगवान् के नामरूप, लीला, धाम इस विग्रह चतुष्टय का प्रयोग हुआ है। इसलिए भी यह स्तवराज कहा जाता है। उपनिषद् में नाम, रूप, लीला और धाम इन्हीं चारों को प्रभु के विग्रह चतुष्टयरूप में स्वीकार किया है। श्रीरामस्तवराज के सातवें मंत्र में श्रीराम के नाम का वर्णन हुआ है। ४६वें मन्त्र से ५०वें मन्त्रपर्यन्त भगवान् के रूप का वर्णन २८वें मन्त्र से ४५वें मन्त्र तक भगवान् की लीला का वर्णन एवं ११वें मन्त्र से १६वें मंत्र तक श्रीराम के दिव्य धाम का वर्णन हुआ है। इसमें पग पग पर श्रीराम के सर्वपरत्व, सर्वावतारित्व एवं सर्वशेषित्व का प्रतिपादन किया गया है जो अन्यत्र स्तुतियों में उपलब्ध नहीं होता।

नारदकृतस्तोत्र से श्रीराम का प्रसन्न होना इस स्तोत्र में कण्ठरवेण कह दिया गया है और दशरथपुत्र राम को ही परब्रह्मस्वरूप में प्रतिष्ठापित किया गया है। और इसे पठनमात्र से ब्रह्महत्यादि महापाप, गोवधादि उपपाप, शारीरादि त्रिविधपाप एवं स्वर्णस्तेयादि पंचपापों का नाशक बताया गया है। इसलिए भी यह सर्वश्रेष्ठ स्तोत्र है। श्लोकों में भी यह सभी स्तोत्रों की अपेक्षा बड़ा अर्थात् १०० श्लोकों वाला है, इसलिए भी इसे

स्तवराज कहा जाता है। महर्षि सनत्कुमार ने श्रीनारद के द्वारा प्रभु श्रीराम के प्रति प्रस्तुत किये गये इस स्तोत्ररत्न का तपोबल से प्राप्त दिव्यचक्षु द्वारा साक्षात् दर्शन किया और फिर इसे अपनी सनत्कुमार संहिता में निबद्ध किया और इसे अपने प्रिय शिष्य वेदव्यास को अध्ययन कराया और वेदव्यास जी ने हस्तिनापुर की राजसभा में धर्मराज युधिष्ठिर को श्रवण कराया। फिर इसी व्यास-युधिष्ठिर संवादरूप स्तवराज को अष्टादशपुराणों के व्याख्याता श्रीसूतजी ने नैमिषारण्य में ८८ हजार ब्रह्मर्षियों के समक्ष वाचन किया। यही इसका वाचनपरम्परा सम्प्रदाय है। प्रत्येक साधक को यथासमय ६००० या १००० श्रीराम मंत्र जपने के पश्चात् श्रीरामस्तवराज का पाठ अवश्य करना चाहिए। इस प्रकार हमारे दीक्षागुरुदेव साकेतवासी श्री श्री १००८ श्री ईश्वरदास जी महाराज परमगुरु श्री श्री १००८ श्री गंगादास जी महाराज, वेषगुरु साकेतवासी श्री श्री १००८ श्री प्रयागविहारी श्रीरामचरणदासजी फलाहारी जी महाराज तथा सद्गुरुदेव परमहंस १००८ श्री साकेतवासी रणछोड़दास जी महाराज जैसे अनेक श्रीरामानन्दीय सिद्ध श्रीविरक्त श्रीवैष्णवसन्तमहानुभावों का तथा व्यक्तिगत मेरा भी दृढ़ विचार, अनुभव तथा मन्तव्य है।

आगममर्यादा के अनुसार श्रीरामस्तवराज के ऋष्यादिन्यास पर विचार करते हैं—

तन्त्र के नियमानुसार किसी भी मंत्र के जप में विनियोग के लिए ऋषि, छन्द, देवता, बीज, शक्ति एवं कीलक इन छः स्मरणीय उपकरणों की आवश्यकता होती है। अभीष्ट फल की प्राप्ति के स्मरण के साथ पूर्वोक्त ऋष्यादि का स्मरण विनियोग कहा जाता है और इन्हीं छहों का हृदयादि तथा करादिन्यास में प्रयोग किया जाता है। न्यास का अर्थ होता है स्थापना। जब हम पूर्वोक्त छहों स्मरणीयों का स्मरण करते हुए क्रम से हृदय, मुख, शिर, शिखा, नेत्र, कवच एवं हाथ का स्पर्श करते हैं इसी प्रकार क्रमशः इन्हीं का स्मरण करते हुए अंगुष्ठ, तर्जनी, मध्यमा, अनामिका, कनिष्ठिका, करतलकर पृष्ठ का स्पर्श करते हैं तभी ये छहों हमारे हृदयादि छः ज्ञानांगों में तथा अंगुष्ठ आदि छः कर्मांगों में भी वास कर देते हैं। और हमारा शरीर

ऋषि, देवता छन्द, बीज तथा कीलक से युक्त होकर छहों विकारों से मुक्त होकर दिव्य बन जाता है। भगवान् की सेवा के लिए उपयोगी हो जाता है। यही ऋष्यादिन्यास के पीछे आध्यात्मिक अवधारणा समझनी चाहिए और स्वयं को भगवान श्री सीतारामजी कीसेवा में उपयोगी बनाने के लिए प्रत्येक श्रीवैष्णवसाधु को श्रीरामस्तवराज पाठ से पूर्व ऋष्यादिन्यास अवश्य करने चाहियें।

इस श्रीरामस्तवराज का साक्षात्कार करने के कारण भगवान् श्री सनत्कुमार इसके ऋषि हैं। अर्थात् श्रीरामस्तवराज किसी के द्वारा बनाया नहीं गया। यह अपौरुषेय है। सनत्कुमार जी ने केवल इसका साक्षात्कार किया है। इसका छन्द अनुष्टुप् है। यद्यपि इसमें १७ उपजाति, ३ शार्दूलविक्रीड़ित, २ मालिनी तथा १ वसन्ततिलका भी है फिर भी अनुष्टुप् छन्द की बहुलता होने से प्रधान में व्यपदेश के नियमानुसार अनुष्टुप् ही इसका छन्द माना गया है। इसमें श्रीराम का ही परमजाप्य, परमतत्व तथा परमध्येय के रूप में प्रतिपादन है। इसलिए भगवान् श्रीरामचन्द्र जी इस स्तोत्रमन्त्र के परमदेवता हैं। भगवती सीता प्रभु श्रीराम की आह्लादिनी शक्ति, लीला में धर्मपत्नी, कृपाशक्ति, वस्तुतस्तु प्रभु की स्वरूपशक्ति ही हैं। इसीलिए वे ही इस स्तोत्रमंत्र का बीज अर्थात् मूलकारण हैं। सीताजी भक्ति का साकार विग्रह भी हैं और श्रीरामभक्ति ही इस स्तोत्रमंत्र का हेतु है। श्रीहनुमान जी महाराज श्रीरामानन्दीय श्रीवैष्णवों के यूथपति, कुलपति तथा तृतीय आचार्य भी हैं। उन्हीं से प्रत्येक श्रीवैष्णव को भजन की शक्ति प्राप्त होती है। इसलिए उन्हीं को यहाँ शक्ति माना गया है। विघ्ननिवारक को ही कीलक कहते हैं। श्रीरामस्तवराज स्वयं ही अपना कीलक है। 'वैदेहीसहितम्' रामस्तवराज ९६ अथवा स्तवराज के ११वें मन्त्र से २२वें मन्त्रपर्यन्त अंशों द्वारा ध्यान करना चाहिए॥श्री॥

卐 **श्रीमद्राघवो विजयते** 卐

अथ प्रकृतमनुसरामः

श्रीसूत उवाच–

श्री सूत जी बोले–

सकलपुराणवेत्ता भगवतत्त्वविज्ञाता सूतः सर्वान् पौराणिकान् ऋषीन् सम्बोधयन् स्तोत्ररत्नमिदं उपक्रमते सर्वशास्त्रार्थेत्यादिना।



**सर्वशास्त्रार्थतत्वज्ञं व्यासं सत्यवतीसुतम्।**
**धर्मपुत्रः प्रहृष्टात्मा प्रत्युवाच मुनीश्वरम्।।१।।**

**अन्वयः**—सर्वशास्त्रार्थतत्वज्ञं सत्यवतीसुतं मुनीश्वरं व्यासं प्रहृष्टात्मा धर्मपुत्रः प्रत्युवाच।

**श्रीराघवकृपाभाष्यम्**—शास्त्राणि वेदतदनुमोदितग्रन्थाश्च शंसतीति शास्त्रम्। शास्त्रं हि विधि– निषेधद्वारा जीवानां कर्मविकर्माणि शंसति। अतो मूलरूपेण वेद एव शास्त्रम्। औपचारिकतया च सर्वोऽपि वैदिको वाङ्मयः शास्त्रत्वेन व्यवह्रियते। सर्वाणि च तानि शास्त्राणि सर्वशास्त्राणि। चत्वारोवेदाः षडङ्गानि, मीमांसा, धर्मशास्त्रम्, न्यायम्, पुराणम्, आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिश्चेति चतुर्दशविद्याः गम्भीरसिद्धान्तप्रतिपादकानि सांख्ययोग– वैशेषिकन्याय मीमांसोत्तरमीमांसाश्च। एषां सर्वेषां शास्त्राणां अर्थं तत्वं च जानाति इति सर्वशास्त्रार्थतत्वज्ञः। यद्वा सर्वशास्त्राणां अर्थो भगवान् रामः तस्यैव तत्त्वं परत्वं जानाति इति सर्वशास्त्रार्थतत्वज्ञः। भगवान् व्यासो हि समस्तानां शास्त्राणां अर्थतत्त्वज्ञः यतो हि सः स्वयमेव परमात्मनः कलावतारः इति भागवते प्रसिद्धम्। तथा च श्रीमद्भागवतस्य प्रथमस्कधस्य पञ्चमेऽध्याये व्यासं प्रबोधयन् विविधविद्याविशारदः समस्तशास्त्रार्थपारदो भगवान् नारदः प्राह–

**त्वमात्मनात्मानमवेह्यमोघदृक् परस्य पुंसः परमात्मनः कलाम्।**
**अजं प्रजातं जगतः शिवाय तन्महानुभावाभ्युदयोऽधिगण्यताम्।।** १/५/२१

एवं साक्षाद्भगवतो ज्ञानकलात्वात् महर्षिवेदव्यासः सर्वशास्त्रार्थतत्वज्ञः। अथ च श्रीमद्भागवत एव श्रीमद्भागवतकथोपक्रमे पौराणिक सूतः महर्षीन् सम्बोधयन् भगवन्तं व्यासं परावरज्ञत्वेन प्रत्यपादयत्। तथा हि प्रथमस्कन्धस्य

चतुर्थेऽध्याये भगवान् व्यासः परिचाय्यते सूतेन–

**द्वापरे समनुप्राप्ते तृतीये युगपरिचये।**
**जातः पराशराद्योगी वासव्यां कलया हरेः।।**
**परावरज्ञः स ऋषिः कालेनाव्यक्तरम्भसा।**

इत्यनेन ऋषेः परावरज्ञत्वात् सर्वशास्त्रार्थतत्वज्ञत्वं सुतरां सिद्धं भवति। एवम्भूतं भगवत्कलावतारं वेदव्यासं किम्भूतं इत्यत आह–सत्यवतीसुतम्। सत्यवती नाम वसोः पुत्री या च मत्स्यीगर्भात्प्रसूता पुनश्च दाशराजेन तस्यामेव सत्यवत्यां अमोघवीर्यो महर्षिः पाराशरः भगवत्कलावतारं परिकलितसमस्तशास्त्रार्थसारं भगवन्तं व्यासं गान्धर्वविधिना पाणिगृहीत्यां गर्भाधानक्रियया जनयामास। एवम्भूतं सत्यवतीसुतं मुनीनां वेदशास्त्रार्थमननकर्तृणाम् ईश्वरं श्रेष्ठं स्वामिनं एवम्भूतं व्यासं–व्यसति वेदान् विस्तारयति वा शाखादृष्ट्या व्यस्तान् करोतीति व्यासः यथा चोक्तं श्रीमद्भागवते–

**त एव वेदा दुर्मेधै र्धार्यन्ते पुरुषैः कथम्।**
**एवं चकार भगवान् व्यासः कृपणवत्सलः।।**
**चक्रे वेदतरोः शाखाम्।**

एवं महाभारते–

**ब्रह्मणो ब्राह्मणानां च तथानुग्रहकांक्षया।**
**विव्यास वेदान् यस्मात् स तस्माद् व्यास इतीर्यते।।**

एवम्भूतं व्यासं प्राप्य प्रहृष्टं मनो यस्य तादृशः आत्मशब्दोऽत्र मनः पर्यायः। प्रहृष्टमना धर्मराजो युधिष्ठिरः प्रत्युवाच पप्रच्छ। वचिरत्र प्रश्नार्थः। सर्वशास्त्रार्थतत्त्वज्ञं व्यासं सत्यवतीसुतं मुनीश्वरम् इतीमानि चत्वारि विशेषणानि चतुर्णां विषयाणां सङ्केतं कुर्वन्ति। तथा हि–

भ्रमः प्रमादो, विप्रलिप्सा, कर्णापाटवं चेति चत्वारः सामान्यतो दोषाःपुंसाम्। एभिर्वर्जितः सन् शास्त्रार्थं अवगन्तुमवगमयितुं च पारयति विद्वान्। एभिश्च चतुर्भिर्विशेषणशब्दैर्वेदव्यासस्य चतुर्दोषरहितत्वं सूचितम्। सर्वशास्त्रार्थतत्वज्ञः अतस्तस्मिन् शास्त्रेषु न भ्रमः। व्यासः वेदान् व्यसति वेदान् व्यास्यद्वा अतस्तस्मिन् प्रमादो न भवितुं शक्नोति। प्रमादी वेदान् व्यस्तुं न शक्नोति। सत्यवतीसुतः एतन्माता सत्यवती सत्यवादिनी, सत्यो भगवान्

व्यासः स एव गर्भरूपेण अस्त्यस्यां इति सत्यवती। अथवा सद्भ्यो इतः सत्यः व्यासः स एव पुत्रःअस्त्यस्या इति सत्यवती एवम्भूतायाः सत्यवत्याः सुतः सन् नासौ विप्रलिप्सुर्भवितुं शक्नोति। मुनीश्वरः अतस्तस्मिन् कर्णापाटवोऽपि न भवितुं शक्नोति। मननकर्तारो हि पटुकर्णाः इति हि प्राचीनो राद्धान्तः। मुण्डकश्रुतिः तत्वजिज्ञासार्थं सद्गुरुलक्षणं स्पष्टयन्ती प्राह–

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतःकृतेन।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।**

(मुण्डक १/२/१२)

परीक्ष्य लोकान् कर्मचितान् समीक्ष्य मनसा अकृतपरमात्मा कृतेन नित्यसंसारेण न प्राप्तुं शक्नोतीति विभाव्य ब्राह्मणः संसारतः प्राप्तनिर्वेदः तस्य ब्राह्मणो विज्ञानार्थं समित्पाणिः सन् श्रोत्रियं ब्रह्मनिष्ठं गुरुमेवामिगच्छेत्। इह च त्रयाणां अमीषां प्रधानगुणानां त्रिभिर्विशेषणैः संकेतः। सर्व-शास्त्रार्थतत्त्वज्ञं इत्यनेन वेदव्यासस्य श्रोत्रियत्वं सूचितम्। श्रोत्रियो वेदपारगः। तथा च स्मृतिः–

**जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते।**
**वेदपाठी भवेद् विप्रः श्रोत्रियो वेदपारगः।।**

वेदपारगो हि श्रोत्रियो भवितुं शक्नोति अतः सर्वशास्त्रार्थतत्त्वज्ञमिति विशेषणेन वेदव्यासे श्रोत्रियत्वं, सत्यवतीसुतम् इत्यनेन तस्य ब्रह्मनिष्ठत्वं स्वयमेव भगवती सत्यवती जगतामुपचिकीर्षया साक्षात् भगवत्कलावतारं परमभागवतशिखामणिं वेदव्यासं महर्षेः पराशरात् जनयामास। अतस्तस्य ब्रह्मनिष्ठत्वे नास्ति शंकापंककलङ्कावकाशः। पुनश्च मुनीश्वरपदेन वेदव्यासस्य गुरुत्वं सूचितम्। गृणाति सम्पूर्णाननर्थान् यः सः गुरुः स च मुनीश्वर एव। न खलु मननमन्तरेण कोऽपि शास्त्राणि व्याख्यातुं प्रभवेत्। यतो ह्यसौ मुनीश्वर अतो गुरुः। गुरुगीतायां गुरुशब्दस्य व्युत्पत्तिं स्पष्टयन्ती स्मृतिः कथयति–

**गुः शब्दोऽन्धकारः स्याद् रुः शब्दस्तन्निरोधकः।**
**अन्धकार निरोधत्वाद् गुरुरित्यभिधीयते।।**

अन्धकारनिरोधको गुरुः स च मुनीश्वर एव नावनीश्वरः। एवंविधं गुरुं प्राप्य धर्मस्य धर्मदेवस्य पुत्रः धर्मदेवप्रसादात् तत्रभवत्या कुन्त्या

पाण्डुक्षेत्रभूतया प्रसूतः महाराजो युधिष्ठिरः प्रहृष्टात्मा प्रसीदत्यात्मनि महता सौभाग्येन श्रोत्रियब्रह्मनिष्ठगुरोरुपलब्ध्या संजातप्रहर्षः प्रत्युवाच श्रीरामविषयकम् प्रश्नत्रयं समुपस्थापयामास। आचार्याणां हि त्रयो गुणाः स्मृत्या मानव्या स्पष्टीकृताः—

**आचिनोति च शास्त्राणि ह्याचारे स्थापयत्युत।**
**स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते।।**

शास्त्राणि समादरेण समाचिन्वन् सकलजनान् वैदिकाचारे स्थापयन् स्वयमाचरंश्च वेदानुमोदितान् धर्मान् ब्राह्मण आचार्यपदभाक् भवति। अत्र हि विशेषणत्रयेण एषामेव त्रयाणां गुणानां वेदव्यासे वर्तमानत्वं समसूचि। तथा हि सर्वशास्त्रार्थतत्त्वज्ञमित्यनेन वेदव्यासस्य शास्त्राचयनं सत्यवतीसुतं इत्यनेन जनानामाचारस्थापकत्वं लोकान् शिक्षयितुं हि सत्यवत्या सूतोऽसौ पराशरात्। 'मुनीश्वरं' इत्यनेन स्वस्यापि वेदानुकूलाचरणनिष्ठत्वम्। एवम्भूतमाचार्यं प्राप्य युधिष्ठिरस्य आत्मा प्रासीदत्। यतो हि 'आचार्यवान् पुरुषो वेद' इति श्रुत्या प्रशस्ताचार्यस्यैव पुरुषवेतृत्वात्। धर्मपुत्रस्य युधिष्ठिरस्य प्रहृष्टात्मत्वं सुतरां संगच्छते।

भगवतो व्यासस्य पूजां विधाय तस्मै उचितमासनं समर्प्य सत्कृत्य आचार्यत्वेन च श्रीरामतत्त्वजिज्ञासायां वृत्वा धर्मपुत्रः प्रत्युवाच। तत्र प्रत्युवाच शब्देन महाराजस्य युधिष्ठिरस्य वेदव्यासे प्रणिपातत्वं सेवापूर्वकप्रश्नक्रिया च सूचिता। तथा चाह-गीतायाश्चतुर्थेऽध्याये चतुस्त्रिंशे भगवान् श्रीकृष्णः—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः।।**

प्रत्युवाचेति क्रियापदमेव गीतोक्तानां सम्पूर्णानां तत्त्वजिज्ञासुविधेयानां निर्देशकम्।।श्रीः।।

**श्रीराघवकृपाभाष्य—**समस्त पुराणों एवं भगवतत्त्व के ज्ञाता सूत जी सब पौराणिक ऋषियों को सम्बोधित करते हुए प्रस्तुत स्तोत्ररत्न का उपक्रम करते हैं—

सम्पूर्ण शास्त्रों के अर्थ एवं तत्त्व को जाननेवाले श्रीसत्यवती के पुत्र मुनियों में श्रेष्ठ महर्षि वेदव्यास से अत्यन्त प्रसन्न अन्तःकरण से युक्त होकर

धर्मपुत्र महाराज युधिष्ठिर ने श्रीराम के विषय में तीन प्रश्न किये। यहाँ शास्त्र शब्द का तात्पर्य वेद से है। क्योंकि जो शासन अर्थात् अनुशासन करता है उसे शास्त्र कहते हैं। 'शासनाच्छास्त्रम्'। भगवान् वेद कर्तव्याकर्तव्य के प्रति मनुष्यमात्र का अनुशासन करते हैं। और भगवती गीता में भी भगवान श्रीकृष्ण कहते हैं—कार्य और अकार्य की व्यवस्था में तुम्हारे अर्थात् मनुष्यमात्र के लिए शास्त्र ही प्रमाण हैं। क्या करना है, क्या नहीं करना है इसमें हम अपने मन से कुछ भी नहीं कर सकते—

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि।।**

गीता १६/२४

और उन्हीं वेद से अनुमोदित सम्पूर्ण वैदिक वाङ्मय अर्थात् ऋग्वेद से लेकर हनुमानचालीसापर्यन्त सम्पूर्ण वेदानुमोदित साहित्य ही शास्त्र है। चारों वेद, चारों उपवेद, शिक्षा, कल्प, निरुक्त, ज्योतिष, छन्द एवं व्याकरण, अठारहों स्मृतियाँ अठारहों पुराण, मीमांसा, धर्मशास्त्र पुराण एवं न्याय, आन्वीक्षिकी अर्थात् मोक्षविद्या, त्रयी वेदत्रयी, वार्ता वाणिज्यविद्या और दण्डनीति एवं वैदिक सिद्धान्त के प्रतिपादक सांख्य, योग, वैशेषिक, न्याय, पूर्वमीमांसा, उत्तरमीमांसा और इनके प्रतिपादक रामायण, महाभारत आदि आर्षग्रन्थ ये सब शास्त्र हैं और इनके अर्थ तात्पर्य भगवान् राम हैं। उनका परत्व ही यहाँ तत्त्व है। ऐसे सभी शास्त्रों के अर्थ को भगवान् राम के परत्व के ज्ञाता मुनि श्री वेदव्यास जी को सर्वशास्त्रार्थतत्त्वज्ञ कहा गया। वेदव्यास स्वयं परमात्मा के कलावतार हैं। इसलिए श्रीमद्भागवत में वेदव्यास को सम्बोधित करते हुए महर्षि नारद कहते हैं–हे अमोघद्रष्टा! तुम अपने को जगत् के हित के लिए सत्यवती में उत्पन्न अजन्मा साक्षात् परमेश्वर के कलारूप में ही समझो। व्यास सत्यवती के पुत्र हैं। जो सत्यवती महाराज वसु की कन्या हैं। जो मछली के उदर से उत्पन्न हुईं और उन्हें महाराज वसु ने दाशराज नामक एक मल्लाह को दे दिया और यमुना में धर्मार्थ नाव चलाते हुए उन्हीं सत्यवती को तीर्थयात्रा करते हुए महर्षि वसिष्ठ के पौत्र शक्ति के पुत्र मुनि पराशर ने देखा। और उनमें ही भगवान की माँ होने की योग्यता का निश्चय करके पराशर ने उनसे ही भगवान के गर्भाधान

की प्रार्थना की और सत्यवती में महर्षि पराशर ने वेदव्यास को पुत्ररूप में प्रकट किया। वेदव्यास शास्त्रों को मनन करने के कारण मुनियों में श्रेष्ठ अर्थात् जो मुनीश्वर हैं ऐसे महर्षि को प्राप्त करके महाराज युधिष्ठिर का मन प्रसन्न हुआ और उन्होंने वेदव्यासजी से श्रीराम विषयक तीन प्रश्न किये। यहाँ चार द्वितीयान्त शब्दों का प्रयोग है। इन चारों से वेदव्यास में भ्रम, प्रमाद, विप्रलिप्सा और कर्णापाटव इन चार दोषों का अभाव सूचित किया गया है। भ्रमपूर्ण व्यक्ति शास्त्र की ठीक व्याख्या नहीं कर सकता और प्रमादी शास्त्रों को न तो समझ सकता है और न ही समझा सकता है। विप्रलिप्सा अर्थात् जिसमें किसी भी प्रकार का लोभ होता है वह सिद्धान्त को न्याय नहीं दे सकता। कर्णापाटव अर्थात् जो सुनने की भूल कर देता है वह शास्त्रों का ठीक ठीक निरूपण नहीं कर सकता। इसलिए श्रवण की कुशलता शास्त्रज्ञ को अपेक्षित है और उसके लिए अनिवार्य भी है। इन चारों दोषों से वेदव्यास रहित हैं और इसी की सूचना के लिए यहाँ चार द्वितीयान्त रखे गए हैं। सर्वशास्त्रार्थतत्त्वज्ञं–अर्थात् वेदव्यास जी सर्वशास्त्रों के अर्थ एवं तत्त्व को जानते हैं इसलिए इन्हें कहीं भी भ्रम नहीं है। व्यासम्–इन्होंने स्वयं वेद को विस्तृत किया है। एक वेद की इन्होंने चार शाखाएँ बनाईं। और एक एक वेद की फिर अनेक शाखाओं का निर्माण किया और सम्पूर्ण शिष्योंमें उनका विभाजन किया इसलिए महाभारत के आदिपर्व के ६३वें सर्ग के ८८वें श्लोक में स्वयं कहा गया है–

**ब्राह्मणो ब्राह्मणानां च तथानुग्रहकांक्षया।**
**विव्यास वेदान् यस्मात्सः तस्माद्व्यास इतीर्यते॥**

वेद एवं ब्राह्मणों के अनुग्रह की इच्छा से महर्षि वेदव्यास ने वेदों को विस्तृत किया शाखाबद्ध किया इसलिए इनको व्यास कहते हैं। सत्यवतीसुतम्–यह सत्यवती के पुत्र हैं। सत्यवती का तात्पर्य है कि सत्यरूप व्यास को उन्होंने अपने गर्भ में रखा। सन्तों के हितैषी परमात्मास्वरूप व्यास को उन्होंने जन्म दिया, ऐसी माँ के पुत्र होने के कारण इनको किसी प्रकार की विप्रलिप्सा नहीं हो सकती। यह मुनियों के ईश्वर हैं इसलिए इनमें कर्णापाटव दोष हो ही नहीं सकता। क्योंकि ये बहुश्रुत हैं, शास्त्रों का इन्होंने

श्रवण किया है और 'श्रीमद्भागवतम्' में स्वयं वेदव्यासजी अपनी कार्यक्षमता का परिचय देते हुए प्रथम स्कन्ध के पंचमाध्याय में स्पष्ट कहते हैं—

**धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः।**
**मानिता निर्व्यलीकेन गृहीतं चानुशासनम्॥**

अर्थात् गायत्री व्रत धारण करके मैंने निष्कपट भाव से छन्द, गुरुजन एवं अग्नियों का सम्मान किया है तथा वेदानुमोदित अनुशासन को स्वीकार किया है इसलिए इन चारों दोषों से रहित होने के कारण महर्षि वेदव्यास को अपनी राजसभा में सहसा उपस्थित देखकर धर्मपुत्र महाराज युधिष्ठिर का मन प्रसन्न हुआ और उन्होंने वेदव्यास जी से श्रीरामविषयक तीन प्रश्न करने का मन बना लिया। मुण्डकोपनिषद् के प्रथम मुण्डक के द्वितीय खण्ड में भगवती श्रुति स्पष्ट कहती हैं कि ब्राह्मण को इस क्षणभङ्गुर संसार की परीक्षा करनी चाहिए और जब वह इस संसार की परीक्षा कर ले और उसे यह निश्चय हो जाए कि नित्य परमात्मा अनित्य संसार में नहीं प्राप्त हो सकते तब उसे संसार से वैराग्य हो जाता है और फिर तो वह ब्रह्मतत्व को जानने के लिए हाथ में समिधा लेकर श्रोत्रिय, ब्रह्मनिष्ठ गुरु की शरण में जाता है। ब्रह्मवित् आचार्य के ये तीन विशेषण हैं। यहाँ ब्रह्मवित् आचार्य के ये तीन वैशिष्ट्य ही यहाँ तीन विशेषणों से सूचित किये गए हैं। ब्रह्मवित् आचार्य को श्रोत्रिय होना चाहिए। श्रोत्रिय शब्द का अर्थ है वेद का पारंगत। स्मृति भी कहती है—ब्राह्मणी में ब्राह्मण द्वारा गर्भाधान क्रिया से उत्पन्न सुयोग्य मनुष्य जन्म से ब्राह्मण होता है और फिर उपवीतादि संस्कारों से वही द्विज बन जाता है। द्वाभ्यां जन्मसंस्काराभ्यां जायते इति द्विजः। और वही वेदों का पाठ करने से विप्र होता है तथा वही आगे चलकर वेदों का महातात्पर्य जानकर श्रोत्रिय बन जाता है। अतः 'सर्वशास्त्रार्थतत्त्वज्ञं' शब्द से यहाँ व्यासजी को श्रोत्रिय सिद्ध किया गया। 'सत्यवतीसुतम्' विशेषण से व्यासजी में ब्रह्मनिष्ठत्व सूचित हुआ। व्यास सत्यवती के पुत्र हैं। सत्यवती ने उन्हें संसार के हित के लिए महर्षि पराशर से प्रकट किया है इसलिए उनकी ब्रह्मनिष्ठा में कोई सन्देह ही नहीं है। वह स्वयं परब्रह्म परमात्मा के कलावतार हैं अतः उनका ब्रह्मनिष्ठत्व स्वभावसिद्ध है। वे मुनीश्वर हैं। मनन

करने वाले महर्षियों में श्रेष्ठ हैं। इसलिए वे ही एकमात्र गुरु हैं। गुरु शब्द का अर्थ है जो शास्त्र का प्रवचन करे। गुरुगीता के अनुसार जो जीव के अन्धकार को दूर करके उसमें प्रकाश का संचार करे, उसे गुरु कहते हैं। मुनीश्वर शब्द से वेदव्यास में गुरु के समस्त लक्षणों का सङ्केत हो गया। मनुस्मृति में आचार्य के तीन लक्षण कहे गए हैं :–

जो आदरपूर्वक शास्त्रों का अनुशीलन करता है और लोगों को भी सदाचार में प्रतिष्ठित करता है। अर्थात् सामान्य जनता को आचरणशील बनाता है। और जो स्वयं वेदानुमोदित श्रुतिस्मृतिपुराणोक्त श्रेष्ठ आचरणों को अपने जीवन में उतारता है उसे ही आचार्य कहा जाता है।

संयोग से यहाँ प्रयुक्त व्यास के तीनों विशेषण उनमें पूर्ण आचार्यत्व की सूचना दे रहे हैं। वेदव्यास सर्वशास्त्रार्थतत्त्वज्ञ हैं इसलिए उनका आदरपूर्वक शास्त्राचयन यहाँ संकेतिक हुआ। वे सत्यवती पुत्र हैं अतएव उनकी आचार स्थापना भी संकेतित हुई क्योंकि संसार को सदाचार में व्यवस्थित करने के लिए ही सत्यवती ने उन्हें पराशर के अनुरोध पर अपने गर्भ में धारण किया था। महर्षि वेदव्यास मुनियों में श्रेष्ठ हैं इसलिए उनका स्वयं सदाचार सम्पन्नत्व सिद्ध हुआ। श्रेष्ठ मुनि ही सदाचारी हो सकता है। शास्त्र कहते हैं–**आचारहीनं न पुनन्ति वेदाः।** आचारणहीन को वेद भी पवित्र नहीं कर पाते। श्रुति कहती है–**आचार्यवान् पुरुषो वेद।** यहाँ मतुप् प्रत्यय प्रशस्त अर्थ में हुआ है। अर्थात् श्रेष्ठ आचार्य की कृपा से युक्त व्यक्ति ही परमपुरुष परमात्मा को प्राप्त कर सकता है। युधिष्ठिर के सौभाग्य से आज उन्हें श्रेष्ठ आचार्य मिले हैं। जो रामानन्द सम्प्रदाय की परम्परा के भी एक आधिकारिक आचार्य हैं। महर्षि वेदव्यास स्वयं भी श्रीराममंत्र परम्परा के वरिष्ठ आचार्य हैं। हमारी आचार्यपरम्परा में सर्वप्रथम आचार्या हैं भगवती सीता और इनके अनन्तर श्री हनुमान जी महाराज अनन्तर ब्रह्मा, ब्रह्मा के शिष्य महर्षि वसिष्ठ, वसिष्ठ जी के शिष्य शक्ति, और शक्ति के शिष्य पराशर, पराशर के शिष्य भगवान् वेदव्यास। इस प्रकार श्रीराममन्त्र परम्परा में महर्षि वेदव्यास सप्तम आचार्य हैं। ऐसे आचार्य को पाकर धर्मपुत्र युधिष्ठिर का मन अत्यन्त प्रसन्न हुआ। यहाँ आत्मा शब्द मन का ही पर्यायवाची है। अब युधिष्ठिर

जी ने वेदव्यास जी से भगवान् श्रीराम के विषय में तीन प्रश्न किये। युधिष्ठिर वेदव्यास जी से तीन प्रश्न करेंगे अतः यहाँ व्यासजी के लिए प्रयुक्त तीन द्वितीयान्त विशेषणों से उनमें तीनों प्रश्नों के उत्तरदान की क्षमता का भी संकेत किया गया॥श्री॥

**युधिष्ठिर उवाच—**युधिष्ठिरः युधि संसारसंघर्षे स्थिरः इति युधिष्ठिरः। इह 'युधिगविम्यां स्थिरः' इति पाणिनीयसूत्रेण सकारस्य मूर्धन्यषकारः, तत्संयोगात् ष्टुत्वेन थकारस्य ठकारात् युधिष्ठिरः। अयं संसारयुद्धे स्थिरः स्थितधीश्च इत्यनेन धर्मराजस्य स्थितप्रज्ञत्वं सूचितम्। 'उवाच' इति शब्दो हि अत्र प्रश्नार्थः।



**भगवन् योगिनां श्रेष्ठ सर्वशास्त्रविशारद।**
**किं तत्त्वं किं परं जाप्यं किं ध्यानं मुक्तिसाधनम्॥२॥**

**रा०कृ०भा०—**महाराजो युधिष्ठिरः वेदव्यासं संस्तुत्य प्रश्नत्रयं प्रस्तौति–हे भगवन्। भगानि षडैश्वर्याणि–ऐश्वर्य, धर्म, यशः श्रीज्ञानवैराग्याख्यानि तानि नित्यं प्राशस्त्येन सामग्रयेण सन्ति यस्मिन् स भगवान्, तत्सम्बुद्ध हे भगवन्। योगिनां योगयुजां श्रेष्ठः योगिचूड़ामणिः योगिनो हि योगक्रियया भगवन्तं प्रणिदधिति। यथोक्तं महर्षिणा पतञ्जलिना–**ईश्वरप्रणिधानाच्च।**

तेषु वेदव्यासः श्रेष्ठः। योगिश्रेष्ठत्वे हि गीतालक्षणं व्याचष्टे–

**योगिनामपि सर्वेषां मद्‌गतेनान्तरात्मना।**
**श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥**

सर्वेषामपि योगिनां मध्ये यः मद्‌गतेन मदभिन्नश्रीकृष्णप्राप्तेन अन्तरात्मना चेतसा श्रद्धावान् आस्तिकबुद्धिसम्पन्नः सन् मां मदभिन्नं कृष्णं भजते सेवते स एव मे मयापि युक्ततमः श्रेष्ठयोगी मतः पूजितः स्वीकृतश्च। इह पूजार्थत्वात् षष्ठी तृतीयार्था। भवान् श्रद्धावान् सन् भगवन्तं भजते अतो भवान् योगिनां श्रेष्ठः सर्वशास्त्रविशारद हे सर्वेषु शास्त्रेषु कुशलः निपुणः प्रभो! अद्याहं भवतः श्रीचरणेषु प्रश्नत्रयं समुपस्थापयामि। भवान् भगवान् वर्तते अतो भवन्तं तत्त्वं पृच्छामि। भवान् योगिश्रेष्ठः अतो हेतोर्भवन्तं परं जाप्यं पृच्छामि। भवान् सर्वशास्त्रविशारदः अतः श्रीचरणेषु मुक्तिसाधनं परं ध्यानं जिज्ञासे। प्रश्नाकारं स्पष्टयति–इह 'परं' शब्दः त्रिभिः प्रश्नैः सहान्वेति।

अर्थात्–किं परं तत्त्वम्? किं परं जाप्यम् मुक्तिसाधनं? किं परं ध्यानं च? युधिष्ठिरस्य चायमभिप्रायः यद् भवान् भगवान्। भगवान् हि भूतानां उत्पत्ति विनाशं गतिमगतिं विद्यामविद्यां च वेत्ति। अतो हेतो एषां षण्णां वेतृत्वात् भगवता निश्चितमेव परं तत्त्वं ज्ञायते। अतोऽहं भवन्तं परं तत्त्वं पृच्छामि। तत्त्वानि अनेकानि। अत्र आचार्या विवदन्ते विप्रतिपद्यन्ते च मनीषिणः। सांख्यदृष्ट्या क्वचित् पंचविंशतिस्तत्वानि क्वचित् षड्विंशतिः, वैशेषिक दृष्ट्या सप्तपदार्था एव तत्त्वभूताः न्यायदृष्ट्या षोड्शतत्वानि प्रमाणप्रभृतीनि। पूर्वमीमांसादृष्ट्या कर्मैव परं तत्त्वम्। उत्तरमीमांसादृष्ट्यापि तत्त्वसिद्धान्ते मतभेदः। अद्वैतिनः एकमेव तत्त्वं मन्वते केचन तत्त्वद्वयं, केचन अस्मदादयः तत्त्वत्रयम्। इति तत्त्वसिद्धान्ते मतबाहुल्यात् परस्य तत्त्वस्य जिज्ञासा समुचितैव। वस्तुतस्तु परशब्दोपादानात् अत्र तत्त्वं द्वेधा निश्चेतुं शक्यते। अपरतत्त्वं परतत्त्वं च। चिदचिति अपरतत्त्वे तद्विशिष्टं परमात्मभूतं परतत्त्वमिति मे प्रतिभाति। किं परं तत्त्वम्? अपरतत्त्वमहं जानामि। अत्र परतत्त्वस्य जिज्ञासा। परतत्त्वं किम्? जाप्यानि बहूनि। तेषु श्रेष्ठं जाप्यम् जपयोग्यं किम्? जप्तुम् योग्यं जाप्यम्। 'ऋहलोर्ण्यत्' इति सूत्रेण अत्र कर्मणि विध्यर्थलिङि ण्यत् प्रत्ययः। श्रेष्ठं जाप्यं किम्? एवं मुक्तिः स्वस्वरूपावस्थानम्–

**मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः।** इति भागवतद्वितीयस्कन्धस्य चरमाध्याये प्रोक्तत्वाच्छुकाचार्येण। अत्र स्वरूपं नाम जीवस्य दास्यभावस्मरणम्। दास्यभावो हि परमात्मनः जीवस्य स्वरूपम्। तेनैव सह व्यवस्थितिः विशिष्टा अवस्थितिः मुक्तिः। एवंभूता यथा मुक्तेः साधकं परं ध्यानं किम्? केन ध्यानेन परमात्मानं ध्यायन् जीवः संसारस्य मिथ्यानामरूपात्मकं अन्यथारूपं परिहाय स्वस्वरूपेण भगवत् किंकराख्येन सह परमात्मनि जीवस्य व्यवस्थितः स्यात् एवम्भूतायाः मुक्तेः साधनं किं ध्यानम्? साधनमित्यत्र 'करणेल्युट्'। साध्यतेऽनेनेति साधनम्। 'करणाधिकरणयोश्च' इत्यनेन ल्युट् प्रत्ययः। एवम्भूतं प्रश्नत्रयम्।।श्री।।

अथ युधिष्ठिरः प्रश्नमुपसंहरति–

अब युधिष्ठिर प्रश्न का उपसंहार करते हैं।

तदा द्रष्टुः स्वरूपेऽवस्थानम्?

युधिष्ठिर उवाच–युधिष्ठिर बोले–

**श्रोतुमिच्छामि तत्सर्वं ब्रूहि मे मुनिसत्तम।।३।।**

हे मुनिसत्तम! मुनिषु ये सन्तः तेष्वपि भवानधिकः। मुनिषु सन्तः मुनिसन्तः तेषु अपि भवान् अतिशयितः 'अतिशायनेतमबिष्ठनौ' अतिशयः सन् सत्तमः मुनीनां सत्तमः मुनिसत्तमः तम् मुनिसत्तमम् इति व्युत्पत्तिर्वा। मुनिषु यावन्तः सन्तः सनकादिनारदादयः तेषु भवान् अतिशयं अतिश्रेष्ठः। अतएव कृपया तत्सर्वं एषां त्रयाणां प्रश्नानां समुदायभूतं समस्तं मम प्रश्नस्वरूपं ब्रूहि उत्तर। इह प्रार्थने लोट्। हे मुनिश्रेष्ठ! यतो हि मुनिषु ये सन्तः तेषामपि अतिशयितः अतस्तत्सर्वं तच्च, तच्च, तच्च तेषामेकशेषः तत्। तत्सर्वमेव अर्थात् परतत्वपरजाप्यपरध्यानरूपं तत्सर्वं प्रश्नत्रयात्मकं सकलं वस्तु श्रोतुमिच्छामि त्वत्तः इति शेषः। मे मह्यं पृच्छते ब्रूहि मां अनुगृहीतुं ब्रूहि मां पावयितुं ब्रूहि वा। भवान् मुनिषु श्रेष्ठः अतो हेतोः भवति न कापि विचिकित्सा। अतो मया पृष्टानां त्रयाणामपि प्रश्नानां समाधानं कर्तुंभवानर्हति इति तात्पर्यम्।।श्रीः।।

**श्रीराघवकृपाभाष्य**–महाराज युधिष्ठिर वेदव्यास से प्रश्न करते हैं। यहाँ 'उवाच' शब्द प्रश्न के ही अर्थ में है। युधिष्ठिर कहते हैं–

हे भगवन्। हे योगियों में श्रेष्ठ! हे सर्वशास्त्रविशारद महर्षि वेदव्यास! परमतत्व क्या है? सबसे श्रेष्ठ जपयोग्य मन्त्र कौन सा है? और मुक्ति का साधक श्रेष्ठ ध्यान कौन है? अर्थात् युधिष्ठिर कहते हैं-आप भगवान् हैं। आपके ऐश्वर्य, धर्म, यश, श्री ज्ञान और वैराग्य ये छहों तत्व नित्यरूप से सम्पूर्ण रूप से विराजते हैं। इसलिए जीवों की उत्पत्ति, विनाश, गति, अगति, विद्या और अविद्या को भी आप भली भाँति जानते हैं अतः परतत्त्व के सम्बन्ध में मैं आपसे जिज्ञासा करता हूँ। तत्त्व बहुत से हैं और उनके सम्बन्ध में भिन्न-भिन्न आचार्यों के विवाद और मतभेद भी हैं। किन्हीं के मत में पच्चीस तत्त्व हैं, किन्हीं के मत में छब्बीस तत्त्व हैं, किन्हीं के मत चौबीस तत्व हैं। किन्हीं के मत में द्रव्यादि सात पदार्थ ही तत्त्व हैं। न्याय के मत में प्रमाण आदि सोलह पदार्थ ही तत्त्व हैं। पूर्वमीमांसा कर्म को ही तत्त्व मानती है। उत्तरमीमांसा में भी तत्त्व सिद्धान्तों को लेकर आचार्यों में मतभेद है।

कुछ लोग एक तत्त्व मानते हैं, कुछ दो और कुछ लोग तीन तत्त्व मानते हैं। वस्तुतः परमतत्त्व क्या है?

बहुत से जप कहे गये हैं। जप के योग्य मन्त्र को ही जाप्य कहा जाता है। यहाँ विध्यर्थक लिङ् लकार के अर्थ में 'ऋहलोर्ण्यत्' सूत्र से कर्म में ण्यत् प्रत्यय हुआ है। उनमें सबसे श्रेष्ठ जप क्या है? अर्थात् सबसे श्रेष्ठ जपयोग्य मन्त्र कौन सा है? अन्यथारूप को छोड़कर अपने स्वरूप में व्यवस्थिति अर्थात् स्थित हो जाना ही मुक्ति है। हे प्रभो ऐसी मुक्ति का साधन परमध्यान भी है। भागवत में भी द्वितीय स्कन्ध के अन्तिम अध्याय में महर्षि शुकाचार्य जी मुक्ति का यही लक्षण कहते हैं :—

**मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थितिः।**

संसार के कल्पित नामरूप ही अन्यथारूप हैं। भगवान् का दास होना यही जीव का स्वरूप है। इसी रूप में विशेष रूप से स्थित हो जाना ही जीव की मुक्ति है। ऐसी मुक्ति कहाँ? साधनभूत ध्यान क्या है? अर्थात् किस ध्यान से भगवान का ध्यान करके जीव अपने इस मिथ्यानामरूपात्मक अन्यथा रूप को छोड़कर परमात्मा के नित्यसेवक होने का सौभाग्य प्राप्त कर सकता है।

हे मुनिश्रेष्ठ! वह सब मैं आपश्री से ही सुनने की इच्छा कर रहा हूँ। कृपया मुझसे कहें अर्थात् कृपया मुझे अनुगृहीत करने के लिए इन प्रश्नों का उत्तर दें। मुझे समझाएँ। यहाँ युधिष्ठिर की विनम्रता प्रकट होती है। युधिष्ठिर कहते हैं—आप मुनियों में श्रेष्ठ हैं और यह सब मैं आपसे ही सुनना चाहता हूँ क्योंकि आपके अतिरिक्त इन प्रश्नों का समाधान कोई नहीं कर सकता। इसलिए मुझे अनुगृहीत करने के लिए, मुझे पावन बनाने के लिए आप कृपया इन प्रश्नों का उत्तर दें॥श्री॥

**अथ वेदव्यासोत्तरमवतारयति।**

अब वेदव्यास के उत्तर की अवतारणा करते हैं। वेदव्यासजी ने ९७ श्लोकों में उत्तर दिया।

वेदव्यास उवाच—वेदव्यासः उवाच—उदतरत्।

वेदव्यास ने उत्तर दिया।

**धर्मराज महाभाग शृणु वक्ष्यामि तत्त्वतः।।४।।**

**रा०कृ०भा०**—हे महाभाग! धर्मराज! शृणु। तत्त्वतः वक्ष्यामि।

हे महाभाग्यशालिन्! धर्मराज आकर्णय तत्त्वतः वक्ष्यामि। महाभाग—महद्भागं यस्य सः महाभागः तत्सम्बुद्धौ हे महाभाग! अर्थात् तावकं भाग्यं श्रेष्ठम्। यतो हि तव गृहे साक्षात्परमात्मा मनुष्यलिङ्गो गूढो विराजते। यथोक्तं भागवतस्य सप्तमस्य दशमे भगवता स्वयं नारदेन—

**यूयं नृलोके बत भूरिभागा लोकान् पुनानाः मुनयोऽभियन्ति।**
**येषां गृहानावसतीति साक्षाद् गूढं परब्रह्ममनुष्यलिङ्गम्।।** ७/१०/

नारदः कथयति—हे पाण्डवाः अस्मिन् नृलोके यूयं भूरिभागाः बत अत्यन्तं सौभाग्यशीलाः बत निश्चये। अतएव तु लोकान् पुनानाः मुनयो अभियन्ति लोकान् सम्पूर्णानि भुवनानि पवित्रयन्तो मुनयः युष्माकं पार्श्वे आगच्छन्ति। भूरिभागस्य हेतुः कः? साक्षात् मनुष्यलिङ्ग धृतनरशरीरं गूढ़ं प्रच्छन्नमहामहिममयं एवम्भूतं परब्रह्म येषां पाण्डवानां गृहान् भवनानि साक्षात् गूढ़ं सत् आवसति निवसति। अर्थात् साक्षात् परब्रह्म भवतां गृहेषु निवसति किन्तु तद्गूढ़मिव निवसति न तु प्रकटित माहात्म्यम्।

एवम्भूतो युधिष्ठिरः यस्य भगवान् श्रीकृष्णः साक्षात् नयनपथगोचरः तस्य भागमहिमानं किं वर्णयेयम्। अतो हेतोः महाभागेति सम्बोधनम्। धर्मराज—धर्म एव राजा धर्मराजः। तत्सम्बुद्धौ हे धर्मराज! 'राजाहसखिभ्यष्टच्' इत्यनेन टच् प्रत्ययः समासान्तः। शृणु आकर्णय। तत्त्वतः यथार्थतः वक्ष्यामि कथयिष्यामि।।श्रीः।।

**रा०कृ०भा०**—युधिष्ठिर के प्रश्नों का उत्तर देते हुए वेदव्यास जी प्रसन्नता से बोले। हे महाभाग्यशाली धर्मराज! अब सुनिये। मैं यथार्थतः इन प्रश्नों का उत्तर दूँगा। यहाँ महाभाग कहने का तात्पर्य यह है कि तुम्हारे जैसा किसी का भाग्य नहीं है। क्योंकि तुम्हारे ही भवन में साक्षात् आनन्दकन्द श्रीकृष्णचन्द्र जी मनुष्यरूप धारण करके छिपे हुए विराज रहे हैं। इतना बड़ा भाग्य किसका होगा, जिसके यज्ञ में भगवान स्वयं पत्तल उठाने का काम

करते हैं। जिसके मित्र बनते हैं। जिसके सूत्र और दूत सब कुछ बन लेते हैं। इसलिए तुम अत्यन्त भाग्यशाली हो। अब सुनो, मैं भगवान श्रीराम के इन तीनों प्रश्नों को तत्त्व के साथ कहूँगा और यथार्थ कहूँगा अर्थात् जैसा मुझे अनुभव हुआ होगा, वैसा कहूँगा।।श्री।।

**विशेष**–यहाँ दो आधे आधे श्लोकों को एक एक मान लिया गया है।



**यत्परं यद्गुणातीतं यज्ज्योतिरभलं शिवम्।**
**तदेव परमं तत्त्वं कैवल्यपद कारणम्।।५।।**

**रा०कृ०भा०**–अत्र श्रीराम इति अग्रतः अनुकृष्यते। वेदव्यासः युधिष्ठिरं प्रति प्राह–यत्परम्, यत् गुणातीतं, यत् ज्योतिः, यत् अमलम्, यत् शिवम्, श्रीराम इति। तत् एव कैवल्य पदकारणम् परमं तत्त्वम्। यत् परं सर्वतः श्रेष्ठं सर्वेषां पर परायणम्, सर्वेभ्यः कारणेभ्यः कार्येभ्यश्च परम्, सर्वेभ्यः देवेभ्यः परम्, यच्च गुणातीतम् गुणाः मायाकृताः सत्वरजस्तमः आख्याः तान् सत्त्वरजस्तमसः अतीतं इति गुणातीतम्। भगवान् गुणेषु न सज्जते, न वा भगवन्तं गुणाः बध्नन्ति। निर्गुणत्वात्तस्य। अतएव मायागुणेभ्यः परो भगवान् मायागुणांश्च अतीतो भगवान्। किं बहुना, भगवन्तं सेवमानोऽपि गुणान् अतिवर्तते। अतएव श्रीमद्भगवद्गीतायाः चतुर्दशाध्यायस्य षड्विंशे श्लोके भगवान् सुस्पष्टं प्राह–

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते।।** 14/26

यदि अव्यभिचारभक्तियोगेन भगवन्तं सेवमानो महात्मा त्रीन् गुणान् अतिवर्तते तर्हि भगवान् कथं न मायागुणान् अतिवर्तेत। यज्ज्योतिः परम प्रकाशः श्रीरामचन्द्रः परमप्रकाशरूपः यच्च अमलं निर्मलं मलरहितं, यच्च शिवं कल्याणरूपं निरस्तसमस्तहेयगुणकत्वात् समस्तकल्याण–गुणगणनिलयत्वाच्च श्रीराम इति श्रीराम इत्याख्यया प्रसिद्धम् परब्रह्म तदेव कैवल्यपदकारणम् कैवल्यं मोक्षाख्यं यत्पदं तस्य कारणं हेतुः परमं तत्त्वं चिदचिद्विशिष्टं परब्रह्माख्यं परमं तत्त्वं। अत्र पञ्चभिर्विशेषणैर्भगवतः श्रीरामचन्द्रस्य पञ्चलीलाः सङ्केतिताः। यत्परं इत्यनेन बाललीला, बाललीलायां भगवान् सर्वेषां परायणत्वेन दृष्टः शिवादयः सनकादयश्च

तमेव श्रीरामचन्द्रं बालरूपं समुपासते। शिवस्तु बालरूपमेव श्रीरामचन्द्रं ध्यायति जपति च स्मरत्यपि। स्वयं श्रीरामचरितमानसे बालकाण्डे गोस्वामिपादा आमनन्ति यत् श्रीरामकथाप्रवचनस्योपक्रमे मङ्गलाचरण-रूपेण भगवान् शङ्करः बालरूपमेव श्रीरामचन्द्रं वन्दते। तद्यथा–

**झूठेउ सत्य जाहि बिनु जाने। जिमि भुजंग बिनु रजु पहिचाने।।**
**जेहि जाने जग जाय हेराई। जागे जथा सपन भ्रम जाई।।**
**बन्दउँ बालरूप सोइ रामू। सब सिधि सुलभ जपत जिसु नामू।।**
**मंगल भवन अमंगलहारी। द्रवउ सो दसरथ अजिर बिहारी।।**

रामचरितमानस १/११२/१-२-३-४

भुशुंडिरपि बालरूपमेव भगवन्तं समुपास्ते–

**इष्टदेव मम बालक रामा। सोभा वपुष कोटि सत कामा।।**
**निजप्रभु बदन निहारि निहारी। लोचन सुफल करउँ उरगारी।।**
**बालकरूप रामकर ध्याना। कहेउ मोहि मुनि कृपानिधाना।।**
**सुन्दर सुखद मोहि अति भावा। सो प्रथमहिं मैं तुम्हहि सुनावा।।**

लोमशोऽपि बालरूपं श्रीरामं समुपासीनः श्रीभुशुण्डिनः राममन्त्रजपोपक्रमे बालरूपध्यानमेवोपदिशति। सनकादयोऽपि अस्मिन्नेव बालरूपे स्वकीयं मन्तव्यं समादधति। अतएव गीतावलीरामायणे बालकाण्डे गोस्वामिपादाः स्मरन्ति–

**जा सुख की लालसा लटू शिव शुक सनकादि उदासी।**
**तुलसी सोइ सुख सिन्धु कौसिला मगन पै प्रेम पियासी।।**

अतएव परशब्देन अत्र बाललीला सङ्केतिता। तस्यां श्रीरामस्य सर्वेषां पारायणत्वात् सर्वश्रेष्ठत्वाच्च। यद्गुणातीतः त्रीनपि गुणानतीत्य वर्तते। सत्त्वगुणमतीत्य सात्विकं विश्रामं, सात्विकं चिन्तनं परिहरति, रजोगुणमतीत्य राजसीं प्रवृत्तिं जहाति, तमोगुणमतीत्य तामसं विश्राममपि त्यजति। इत्यनेन ब्रह्मविष्णुशिवपरत्वमणि भागवतः समसूचि। सत्वगुणमयत्वाद् विष्णोः, रजोगुणमयत्वाद् ब्रह्मणः तमोगुणमयत्वाच्च शिवस्य, तानतीत्य वर्तमानत्वात् तेभ्यः श्रेष्ठत्वं परत्वञ्च भगवतः सुतरां संघटते। तथा हि–शैवधनुर्भङ्गलीलया भगवतः गुणातीतत्वं स्पष्टं भवति।

किम्बहुना, यदि भगवान् रामचन्द्रः विष्णुमयोऽभविष्यत्तदा सत्त्वगुणातीतो नाभविष्यत्। यतो हि सत्व गुणानतिवर्तते अतो नासौ विष्णुमयः। एवं तारकावधलीलया भगवतः सत्त्वगुणातिवर्तित्वं सूच्यते। मारीचसुबाहु-वधलीलया भगवतः रजोगुणातिवर्तित्वं, अहल्योद्धरणलीलया च भगवतस्तमोगुणातीतत्वं, शैवधनुर्भंगलीलया च भगवतः त्रिगुणातीतत्वं संसूच्यते। यज्ज्योतिः ज्योतिश्शब्देन प्रभोः परमप्रकाशकत्वं, परमप्रकाशकत्वाच्च श्रीरामस्य वनवासजनितशोकान्धकारस्तं नावृणोति एवं च परमप्रकाशकत्वेन भानुकुलभानुत्वाच्च शोकान्धकारमतिवर्तमानः पित्र्यं राज्यं परिहृत्य प्रभुः श्रीरामो वनवासं प्रति सम्प्रतिष्ठते। वनवासकाले भगवतो मुखमुद्रां साक्षात्कृत्य निवेदयन् महर्षिर्वाल्मीकिर्भगवान् प्राचेतसः प्राह—

**न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति।**
**लोककान्तस्य कान्तत्वाच्छीतरश्मेरिव क्षयः।।**
**न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम्।**
**सर्वलोकातिगस्येव लक्षये चित्तविक्रियाम्।।**

परमप्रकाशकत्वाच्च वन्यानां अन्धकारबहुलत्वादेव भगवतः समुद्भासकत्वं वनवासलीलायाम्। राक्षसानां च निशाचरत्वात् तेषां विनाशकत्वेन भगवतः परं ज्योतिष्ट्वं स्पष्टमुपपद्यते। अमलम् इत्यनेन भगवतो रणलीला निरूपिता राक्षसानां विनाशकालेऽपि तेषां मलेन भगवान् न प्रभावितः, शिवम् इत्यनेन भगवतः राज्यलीला उक्ता अर्थात् निहत्य राक्षसकुलं, पितृसिंहासनं अध्यासीनः प्रभुः शिवो भूत्वा सर्वेषां कृते कल्याणरूपः। एवम्भूतः पञ्चलीलामयः यः श्रुत्या श्रीराम इति श्रीरामनाम्ना व्यवहृतः सम्बोध्यमान तदेव श्रीरामाख्यं ब्रह्म कैवल्यपदकारणं कैवल्यपदस्य मोक्षस्य परं कारणभूतं परमं तत्त्वम्।

वस्तुतस्तु अत्र विशिष्टाद्वैतसिद्धान्तः स्पष्टं प्रतिपादितः। भारतीयदर्शनपरम्परायां त्रीण्येव मुख्यतत्त्वानि। यदि संक्षिप्य कथ्येत तर्हि तदेवं वक्तव्यम् यज्जीवजगज्जगदीशाख्यानि एव तत्त्वानि जीवमायाब्रह्माणि जीवमायामहीश्वराः चिदचित् तद्विशिष्टानि परमतत्वानि। जीवश्चित्तत्वं

परमचेतनामयत्वात्। अणुत्वात् अनेकत्वात् चेतनाघनत्वाच्च। जीवस्येदं लक्षणं समुपपद्यते यत् अणुत्वे सत्यनेकत्वे सत् चेतनत्वं जीवत्वम्। ब्रह्मणस्तु व्यापकत्वे सत्येकत्वे सति चेतनत्वं लक्षणम्। जीवोऽणुरनेकश्चेतनश्च। ब्रह्म व्यापकं एकं चेतनं च। जीवाणुत्वे श्वेताश्वतरोपनिषत् सुस्पष्टं साटोपं सततप्रामाण्यं प्रस्तौति–

**बालाग्रशतभागस्य शतधाकल्पितस्य च।**
**भागो जीवः स विज्ञेयस्ततोऽनन्त्याय कल्पते।।**

अत्र शाखादित्वात् स्वार्थे भावे वा 'य' प्रत्ययव्याख्याने अनन्त एव अनन्त्यम् तस्मै अनन्त्याय कल्पते। अथवा ष्यञ् प्रत्ययेऽपि बाहुलकात्तत्र पूर्वरूपादिव्यवस्था। ततः आनन्त्याय इत्यस्य स्थाने ततोऽनन्त्याय। एवं 'छन्दसि बहुलम्' इति सूत्रेण अकारपरकत्वाभावेऽपि 'अतोरोरप्लुतादप्लुते' इत्यनेन तत्र रोः उकारः गुणः पुनश्च बाहुलकात् पूर्वरूपकल्पनम्। एवं जीवस्य अणुत्वं सिद्धम्। ब्रह्मसूत्रेऽपि 'अणवश्च' इति स्पष्टसूत्रं वर्तते। जीवस्याणुत्वसाधने स्वयं भगवान् गीतायां जीवात्मनो गतागतं व्यवहारं समुपपादयति। यदि जीवो नाणुरभविष्यत्तदा देहं त्यक्त्वा देहान्तरं न प्राप्स्यत्। यतः प्राप्नोति ततोऽणुरसौ। यथा चाह भगवान् गीतायाम्–

**देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।। २/१३**

अस्मिन् देहे यथा कौमारं यौवनं जरा तथा देहिनः देहान्तरप्राप्तिः तत्र धीरो न मुह्यति। अत्र दृष्टान्तदार्ष्टान्तिकसमीक्षया सुतरां स्पष्टो भवति मयोक्तः सिद्धान्तः। यथा देहे कौमारप्रभृतयः तिस्रः अवस्थाः तथैव अस्य देहिनः देहान्तरप्राप्तिः। इह कौमारं देवयोनिः यौवनं नरयोनिः जरा तिर्यग्योनिः इति क्रमशो विभावनीयम्। अणुत्वे एव जीवात्मनो देहान्तरप्राप्तिः संघटते न व्यापकत्वे न चैकत्वे च। जीवस्यानेकत्वे भगवतः गीतोक्तः श्लोकः प्रमाणत्वेन बिभावनीयः –

**नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम्।। २/१२**

इह अहं, त्वं, इमे इति अस्मद्, युष्मद, इदम् सर्वनाम्नां यथाक्रमं एकत्व

बहुत्वप्रयोगोक्त्या ब्रह्मणः एकत्वं जीवस्य च बहुत्वं स्पष्टम्। जीवाः बहवः अतएव जनाधिपप्रयोगे इमे इति भगवता प्रोक्तम् परमात्मा एकः अतएव स्वकृते अहमिति भगवान् प्रयुङ्क्ते। न च अस्मिन् सन्दर्भेश्रुतेरप्रामाण्यमिति वाच्यम्। तत्र कठोपनिषदि श्रुतेः परमप्रमाणत्वेन श्रुतत्वात्। तद्यथा—

**नित्या नित्यानां चेतनश्चेतनानाम्**
**एको बहूनां यो विदधाति कामान्।**
**तमात्मस्थं येऽनुपश्यन्ति धीरा**
**स्तेषां शान्तिः शाश्वती नेतरेषाम्।।** २–२–१३

इह ये इति कर्तृपदं तं इति कर्मपदं च। पश्यन्ति जीवाः स्वदर्शनक्रियाभूतं परमात्मानम्। इत्यनेनापि जीवब्रह्मणोर्भेदः स्पष्टं साधितः। नित्यो नित्यानां चेतनश्चेतनानां इत्यत्र परमात्मनः कृते त्रिः प्रथमैकवचनान्तं, जीवात्मनः कृते च त्रिः षष्ठी बहुवचनान्तम्। नित्यो नित्यानां, चेतनश्चेतनानां, एको बहूनाम्। यः परमात्मा नित्यानां नित्यः चेतनानां चेतनः बहूनां एकः। इह नित्यानां, चेतनानां बहूनामिति त्रिः षष्ठी प्रयोगात् षष्ठ्याश्च सम्बन्धमयत्वात् इदमेव सूच्यते श्रुत्या सर्वज्ञशिरोमणिभूतया यत्परमात्मनः जीवात्मना सह त्रैकालिकनित्यसम्बन्धत्वम्। परमात्मा कालत्रयेऽपि जीवस्य सम्बन्धी जीवस्य हितैषी। ननु नित्यो नित्यानाम् इत्यत्र अकारप्रश्लेषः क्रियेत तथा हि अनित्यानां जीवानां ईश्वरः नित्यः अर्थात् जीवस्यानित्यत्वोपपादने तस्यौपाधिकं जीवत्वम् मायाच्छन्नत्वात् इति चेन्न। अकारप्रश्लेषे 'सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्' इति सहचारनियमव्याकोपः। यदि अकारप्रश्लेषः श्रुत्या इष्टः स्यात्तदा 'नित्यो नित्यानां चेतनो चेतनानाम्' इति श्रुतिः निगदितवती भवेत्। परन्तु चेतनश्चेतनानां एको बहूनां इत्यत्र अकारमुक्तशब्ददर्शनात् नित्यो नित्यानां इत्यत्र नाकारप्रश्लेषः परिकल्पनीयः। नित्यो नित्यानामिति प्रयोगतः या जीवब्रह्मणोरपि नित्यत्वं सिध्यति। उभावपि नित्यौ, उभावपि चेतनौ परमात्मा जीवात्मा च। एवं नित्यानां जीवानां शाश्वतः सम्बन्धी, चेतनानां जीवानां शाश्वतो नियामकः बहूनां जीवानां समस्तान् कामान् एकःसन् सम्पादयन् प्रभुः सर्वेषां हृद्देशे विराजते इति श्रौतोऽर्थ। तं आत्मस्थम्। आत्मस्थम् इत्यत्र आत्मना सह तिष्ठतीत्यात्मस्थः तम् आत्मस्थम्। स्वेन सह हृद्देशे विराजमानं

ये धीराः पश्यन्ति तेषां शाश्वती शान्तिः नेतरेषाम् जीवब्रह्म एकत्ववादिनां नैव शान्तिरिति श्रुतिःस्पष्टम् निषिध्यत्यद्वैतवादम्।

किञ्च 'यत्परं यद्गुणातीतं' इत्यत्र श्रुत्या निर्विशेषवादोऽपि निरस्यते। ब्रह्मणो नैव निर्विशेषत्वम्। सविशेषं ब्रह्म विशेषणे च द्वे चिदचिती जीवप्रकृती। अतएव श्वेताश्वतरोपनिषद्यपि ब्रह्मणः त्रैविध्यमुक्तम्–सर्वंप्रोक्तंत्रिविधं ब्रह्ममेतत्। ब्रह्मणश्च त्रैविध्ये जीवप्रकृत्योर्विशेषणत्वं ब्रह्मणश्च विशेष्यत्वं सुतरां संघटते इत्यस्माभिरन्यत्र सयुक्तिकं प्रत्यपादि। श्रीमद्भगवद्-गीतायामपि अचित् प्रकृतिः अपराप्रकृतित्वेन चित्जीवश्च पराप्रकृतित्वेन भगवतैव निर्णायि। तद्यथा–

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा।**
**अपरिमेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत्।।** ७–४–५

तस्माद् ब्रह्मणो निर्विशेषवादः निर्युक्तिकः अप्रामाणिकश्च। ननु 'सर्वं खल्विदं ब्रह्म, तज्जलानीति शान्तोपासीत (छान्दोग्य ३–१४–१) इति श्रुतेर्व्याकोपः स्यात् द्वैतवादे? नहि तावत्। यद्यपि छान्दोग्योपनिषद् व्याख्याने अस्याः श्रुतेरुपरि भूरिशो विचारितं मया, तथाप्यत्रापि विचार्यते।

'सर्वं खल्विदं ब्रह्म तज्जलानीति शान्तोपासीत' इत्यत्र 'उपासीत' इति कर्तृवाचकक्रियाप्रयोगात् उपासकोपास्यभेदः सुतरां संघटते। इदं दृश्यमानं सर्वं ब्रह्म तच्च तज्जजलानि इति अवधार्य जीवः शान्तः समुपासीत अर्थात् इदं सर्वं नामरूपात्मकं ब्रह्ममयम् ब्रह्मात्मकम् तज्जलानि इदमेव ब्रह्म, तदेव ब्रह्म जं, लं, अं इति जीवः इदं संसारात्मकं जगत् तज्जं, तल्लं तदनम्। तथा हि तस्मात् परमात्मनो जायते इति तज्जम्,तस्मिन् लीयते इति तल्लम्, तेन अनितीति तदनम्। तज्जम् जश्च लश्च अन् च इति तज्जलानि।

एवं जगज्जन्मादिकारणत्वेन परमात्मानं ध्यायन् शान्तः उपासीत इत्येव श्रौतोऽर्थः। इत्यनेन नैवाद्वैतवादः सिध्यति 'सर्वं खल्विदं ब्रह्म' इदं ब्रह्मशरीरकम् शरीरशरीरिभावेन विशेषणविशेष्यव्यवस्थापरिकल्पने इदं सर्वं सोपपद्यते। 'जगत्सर्वं शरीरं ते' एवं जीवात्मप्रकृत्योः भगवता सह

शरीरशरीरिभावसम्बन्धः। ननु जीवात्मपरमात्मनोः जगत्परमात्मनोश्च शरीरशरीरिभाव परिकल्पने किं श्रौतमानमिति चेत्, शृणु। अन्तर्यामिप्रकरणमेव बृहदारण्यकीयमत्र परमप्रमाणम्। तत्र अन्तर्यामिप्रकरणं निरूपयता भगवता याज्ञवल्क्येन त्रयोविंशतिकृत्वो भगवतः शरीरसंकेतः—यस्य पृथ्वी शरीरम्, यस्य आपः शरीरम्, यस्य अग्निः शरीरम् ; यस्य वायुः शरीरम्, यस्य आकाशः शरीरम्, यस्य आत्मा शरीरम् इत्यादि। यद् बृहदारण्येके यस्य विज्ञानं शरीरम् तदेव शतपथब्राह्मणे यस्यात्मा शरीरमित्युक्त्वा श्रुतिः विज्ञानात्मनोः परस्परपर्यायत्वमपि साधयति। तस्मात् जीवप्रकृती भगवतः शरीरेचिदचिती ताभ्यां विशिष्टो भगवान् तयोः शरीरीति सुसम्पन्नम्। अतएव शरीरशरीरिभावपरिकल्पने 'सर्वंखल्विदं ब्रह्म' इति सामानाधिकरण्ये न दोषः। अथवा 'सर्वं खल्विदं ब्रह्म' इत्यत्र सर्वमिति सप्तम्येकवचनान्तं बोध्यम्। कथमिति चेत्? इदं ब्रह्म सर्वस्मिन् इति विग्रहे 'सुपां सुलुक् पूर्वसवर्णाच्छेया दाड्यायाजालः' इति सूत्रेण ङेः सुरादेश तस्य च 'अतोऽम्' इत्यनेन अमादेशः 'अमिपूर्वः इत्यनेन पूर्वरूपे कृते सर्वमिति सम्पद्यते। नन्वस्मिन् व्याख्याने किं मानमिति चेत्? परमप्रमाणत्वेन भगवतः श्रीकृष्णस्य गीतोक्तवचनमेव गृह्यताम्। तथाच श्रीगीतायाः पञ्चमे अष्टादशे भगवान् पञ्चकृत्वः सप्तमीप्रयोगे जीवाधिकारणकत्वं परमात्मनः सूचयति। तद्यथा–

**विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः। ५/१८**

तस्मात् निर्विशेषवादः सुतरामप्रामाणिकः। सविशेषवादयोः परमप्रामाण्यमञ्चति एवम्भूतश्चित् जीवात्मा यः खलु परमार्थं चेतुं शक्यः। यश्चिनोति परमतत्वं स एव चित् चेतनामयः जीवः। अकारं वासुदेवमेव चिनोति इत्यचित् प्रकृतिः चिदचिती जीवप्रकृती ताभ्यां शरीरशरीरिभावन विशिष्टः परमात्मा। एवं कार्यकारणभेदात् ब्रह्मणो द्वैविध्यं, कारणं ब्रह्म परव्योम्नि विराजमानं, साकेतादिलोकविहारी श्रीरामकृष्णादिनाम्ना प्रसिद्धम्। एवं कार्यंब्रह्म जगत्प्रसिद्धं प्रतिशरीरं वर्तमानम्। तद्यथा—

**तत् सृष्ट्वा तदेवानुप्राविशत्।**

इति श्रुतिः। 'यो वेद परमे व्योमन् निहितं गुहायाम् सोऽश्नुते सर्वान् कामान् स ब्रह्मणा विपश्चितेति द्वयोः प्रामाण्यं श्रुत्येव साध्यते। द्वे अपि कार्यकारणब्रह्मणी चिदचिद्भ्यां विशिष्टे। विशिष्टं च विशिष्टं च विशिष्टे कार्यकारणब्रह्मणी तयोरद्वैतं विशिष्टाद्वैतम्। एवम्—

**विशिष्टं च विशिष्टं च विशिष्टे कार्यकारणे।**
**तयोरद्वैतमित्येव विशिष्टाद्वैतमुच्यते॥**

तथाभूतं विशिष्टाद्वैतं ब्रह्म वदति व्यवस्थापयति इति विशिष्टाद्वैतवादः इह जीवब्राह्मणोः स्वरूपगतभेदः सम्बन्धाभेदश्च। सम्बन्धनिबन्धने चाभेदे स्वरूपनिबन्धने भेदे च साधिते भेदाभेद प्रतिपादिनीनां श्रुतीनां प्रामाणिकत्वं सुतरां सिध्यति। यत्र भेदवादिश्रुतयः तत्र स्वरूपनिबन्धनः स्वीक्रियताम्भेदः। यत्र ताः अभेदवादिन्यः श्रुतयः तत्र सम्बन्धनिबन्धनो अभेदः स्वीकर्तव्य इति निर्विरोधो राद्धान्तः।

यत्र? **स मृत्यो मृत्युपाप्नोति यः नानेव पश्यति** इत्यत्र **नेह नानास्ति किंचन।** इत्यत्र च अभेदवादमूलकश्रुतीनां प्रामाण्यार्थं सम्बन्धनिबन्धनश्चाभेदः स्वीकरणीयः 'नित्यो नित्यानां चेतनश्चेतनानाम् एको बहूनां यो विदधाति कामान्' इत्यादिश्रुतीनां, प्रामाण्यार्थं तत्र स्वरूपगतभेदवादोऽवगन्तव्य इति निर्विरोधः श्रौतसिद्धान्तो विशिष्टाद्वैतवाद इति।

सम्बन्धनिबन्धने चाभेदे किमपि प्रमाणमिति चेत्, सन्ति भूयांसि, किन्तु विस्तरभिया भाष्यस्य संक्षेपतोः निगद्यमानं समवधार्यताम्–सम्बन्धः ऐक्यम् इति भगवान् सकलपुराणवेदविज्ञः साक्षात्कलावतारो भगवतो नारायणस्य पाराशर्यः सत्यवतीहृदयहर्षवर्धनो व्यासः प्राह। यथा श्रीमद्भागवते दशमे सप्तमे च भगवता ऐक्यस्य सम्बन्धार्थः प्रतिपादितः—

**कामं क्रोधं भयं स्नेहं ऐक्यं सौहृदमेव च।**
**नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते॥**

भा० १०/२९/१५

एवं सप्तमे—

**गोप्यः कामात् भयात्कंसः द्वेषाच्चैद्यादयो नृपाः।**
**सम्बन्धाद् वृष्णयो यूयं स्नेहाद् भक्त्या वयं विभो॥**

भा० ७/ /

ऐक्यंसम्बन्धः इत्येव तत्र दशमे प्राह भावार्थदीपिकायां टीकायां श्रीधरः स्वामी। एवमेव वाल्मीकीयरामायणे सुन्दरकाण्डे रामसुग्रीवकथां कथयन् श्रीमदंजनानन्दवर्धनः प्रभुः हनुमान् प्राह–

**राम सुग्रीवयोरेवं दैव्यैक्यं समपद्यत।**

ऐक्यं सम्बन्धः समपद्यत इति तत्रत्य टीकाकृतः। अतएव अभेदवादिनीनां श्रुतीनां प्रामाण्यार्थं सम्बन्धनिबन्धनश्चाभेदवादः भेदवादिनीनां च श्रुतीनां प्रामाण्यर्थं स्वरूपनिबन्धनः भेदवाद इति विशिष्टाद्वैतवादस्वीकारे सर्वासां श्रुतीनां सामञ्जस्यम्। न च परस्परविरोधिनीनां श्रुतीनां बाध्यबाधकभावः कल्प्येत यथा सूत्राणामिति चेन्न। सूत्राणामिव श्रुतीनां न परिस्थितिः। सूत्राणां पौरुषेयत्वात् श्रुतीनां चापौरुषेयत्वात्। बाधितानां चाप्रामाण्याद् बाधकनाञ्च ततः प्रामाणिकतरत्वात् सूत्रेषु न कोऽपि व्याकोपः संकोचविस्तारपरिकल्पने। किन्तु श्रुतीनां प्रत्यक्षरं प्रामाणिकत्वात् तत्र बाध्यबाधकभावकल्पने नास्तिकत्वापत्तेः। अद्वैतवादसिद्धान्तस्वीकारे च श्रुतीनां परस्परविरुद्धानां बाध्यबाधकभावश्च स्वाभाविकत्वे दुस्त्यजत्वात् नास्तिकत्वस्य च दुष्परिहाराच्च। तस्मान्मदुक्त एव पन्था ज्यायान् इति विरम्यते। एवम्भूतं परत्वगुणातीतत्व ज्योतिष्ट्वामलत्व शिवत्वोपलक्षितस्य परब्रह्मणः श्रीरामस्य कैवल्यपदकारणत्वात् परमतत्त्वत्वं सुस्पष्टममिति। श्रीराम इति सङ्केतेन भगवान् वेदव्यासो युधिष्ठिरं स्मारयति श्रीरामतापनीयोपनिषदि दर्शितां श्रुतिं श्रावयति च–

**रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।**
**इति रामपदेनासौ परब्रह्माभिधीयते।।** रा० ता०

श्रीराम इति यस्तापनीयादिश्रुतिषु प्रसिद्ध तत्परब्रह्म तदेव परं तत्त्वमिति। अतएव तत्र भगवतः सच्चिदानन्दविग्रहत्वेन श्रीरामस्तवराजेप्य–सकृत्प्रतिपादितत्वात् तस्यैव परमतत्त्वं संघटते।।श्रीः।।

**रा०कृ०भा०—**अब उस परमतत्त्व की चर्चा करते हैं जो सबसे परे और सबका परायण है। जो गुणातीत अर्थात् सत्व, रज, तम इन तीनों से अतीत है, जो परमज्योति अर्थात् परमप्रकाशरूप है जो निर्मल तथा

सम्पूर्णकल्याणगुणगणनिलय होने से शिव कल्याणस्वरूप है वही 'श्रीराम' इस नाम से श्रुतियों स्मृतियों में प्रसिद्ध मोक्ष का कारण परब्रह्म ही परमतत्व है। भगवान श्रीराम एकमात्र परमतत्त्व हैं। इस सिद्धान्त का प्रतिपादन करने के लिए महर्षि वेदव्यास अब पाँच विशेषणों के साथ उस परम तत्त्व का निर्वचन करते हैं।

हे महाराज युधिष्ठिर! जो सबसे परे है, जो तीनों गुणों से अतीत हो चुका है, जो परम प्रकाशक है और परम प्रकाश है, जो निर्मल है, जो शिवतत्त्व है और जिसे 'श्रीराम' इस नाम से श्रुति और स्मृतियों ने अभिहित किया है, वही मोक्षपद का कारण श्रीराम नामक परब्रह्म ही परमतत्व है। यहाँ भगवान श्रीराम के लिए पाँच विशेषणों का प्रयोग किया गया है। भगवान श्रीराम सबसे परे हैं वे सभी समवाय असमवाय निमित्त कारणों से परे हैं वे सभी देवताओं से भी परे हैं, वे मन बुद्धि और इन्द्रियों से परे हैं इसलिए श्रीराम का ही सर्वपरत्व सिद्ध होता है। भगवान् श्रीराम मोहादिविकारों से भी परे हैं। इसलिए उन्हें सुखसन्दोहमोहपर कहा जाता है। **यद् गुणातीतं**–ये तीनों गुणों से अतीत हैं अर्थात् सत्व, रज और तम ये तीनों ही गुण प्रभु श्रीराम को बाँध नहीं पाते। स्वयं शास्त्र कहते हैं कि वे निर्गुण हैं सभी गुण उनमें लीन हो जाते हैं, वे मायिक गुणों से परे हैं। वे ही एकमात्र परमज्योति प्रकाशस्वरूप हैं, वे निर्मल हैं, वे शिव हैं। यहाँ पाँच विशेषणों का प्रयोग करके भगवान् श्रीराम की पाँच लीलाओं का भी संकेत है। बाललीला में वे पर हैं अर्थात् सबके परायण हैं। सनकादि ऋषि शुकादि परमहंस एवं ब्रह्मादिदेवता उनके उसी बालरूप का चिन्तन करते हैं। स्वयं रामचरितमानस के बालकाण्ड में दोहा क्रमाङ्क ११२ में चार पंक्तियों द्वारा शिवजी बालरूप की ही स्तुति करते हैं–

**झूठहु सत्य जाहि बिनु जाने। जिमि भुजंग बिन रजु पहिचाने।।**
**जेहि जाने जग जाय हेराई। जागे जथा सपन भ्रम जाई।।**
**बन्दउँ बालरूप सोइ रामू। सब सिधि सुलभ जपत जिसु नामू।।**
**मंगलभवन अमंगल हारी। द्रवउ सो दसरथ अजिर बिहारी।।**

अर्थात् जिनको जाने बिना असत् पदार्थ भी सत् प्रतीत होता है,

जिस प्रकार पहचाने बिना रस्सी भी सर्प लगती है, जिनको जानने से जगत् उसी प्रकार हो जाता है, जैसे जागने पर स्वप्न का भ्रम मिट जाता है। अर्थात् परमात्मा श्रीराम को जाने लेने के पश्चात् जगत् रामरूप में सत्य दिखता है। स्वतः असत्य दिखता है। और सिद्धान्त में भी यही बात कही गई है कि जगत् स्वयं में असत्य होता हुआ भी रामस्वरूप से सत्य है—

**तस्माद् रामस्वरूपं हि सत्यं सत्यमिदं जगत्।**

ऐसे बालरूप श्रीराम का मैं वन्दन करता हूँ कि जिनका नाम जपने मात्र से सभी सिद्धियाँ सुलभ हो जाती हैं। वे मंगलों के भवन एवं अमंगलों के हरने वाले हैं। ऐसे महाराज दशरथ के आँगन में विहार करने वाले श्रीराम मुझ पर द्रवित हो जायें। लोमश जी ने भी भुशुण्डि जी को बालरूप रामजी के ध्यान का ही उपदेश किया—

**बालकरूप राम कर ध्याना,**
**कहेउ मोहि मुनि कृपा निधाना।।**
**सुन्दर सुखद मोहि जो भावा,**
**जो कह प्रथमहिं तुम्हहिं सुनावा।।**

अर्थात् कृपानिधान महर्षि लोमश ने मुझे बालकरूप रामजी के ध्यान का उपदेश किया जो बहुत सुन्दर एवं सुखदायक था, जो मुझे बहुत अच्छा लगा, जिसे मैंने आपको पहले ही सुना रखा है। भुशुण्डि जी स्वयं बालकरूप राम को ही इष्टदेव मानते हैं—

**इष्टदेव मम बालक रामा।**
**सोभा बपुष कोटि सत कामा।।**

जिनके शरीर की शोभा करोड़ों कामदेव के समान है ऐसे बालकरूप श्रीराम ही मेरे इष्टदेव हैं। इस प्रकार गीतावली रामायण में भी स्वयं गोस्वामी जी कहते हैं—इस सुख की लालसा में तो शिवजी लटू और शुक तथा सनकादि उदासी हैं—

**जा सुख की लालसा लटू सिव, सुक सनकादि उदासी।**
**तुलसी तेहि सुख सिन्धु कौसला मगन पै प्रेम पियासी।।**

इसलिए यहाँ 'पर' शब्द से बाललीला का संकेत है। **'यद्गुणातीतम्'**

भगवान राम गुणातीत हैं। गुणातीत शब्द से विवाहलीला का संकेत हुआ है। यहाँ भगवान राम तीनों गुणों से परे दिखते हैं। सत्वगुण, रजोगुण और तमोगुण का बखान उनको बाँध नहीं पाता। सुख और ज्ञानसंग से वे नहीं बँधते। विश्वामित्र के साथ प्रयाण करते समय उन्होंने सुखासक्ति और ज्ञानासक्ति छोड़ी। पिता का धाम छोड़कर सुखासक्ति का त्याग किया और विश्वामित्र के साथ चलकर राक्षसों को मारने में ज्ञानासक्ति छोड़ी। ताड़का का बध करके वे स्वयं रजोगुण से अतीत, अहल्या के उद्धरण से उनका तमोगुण से अतीत होना सिद्ध हुआ। शंकर धनुषभंगलीला से उन्होंने अपने को तीनों गुणों से ऊपर सिद्ध किया। इसीलिए तो गुणमय धनुष को उन्होंने तोड़ा। **'ज्योति'**–बनवास लीला में श्रीराम का ज्योतिस्वरूप प्रकट हो जाता है। वे प्रकाशस्वरूप हैं। सारा संसार प्रकाश्य है और भगवान् राम प्रकाशक हैं। वे सहज प्रकाशरूप हैं—

**सहज प्रकास रूप भगवाना।**
**नहिं तहँ पुनि बिग्यान बिहाना।।**

इसीलिए वनवास लीला में शोकान्धकार उनके व्यक्तित्व को नहीं ढक पाता। महर्षि वाल्मीकि स्वयं कहते हैं कि भगवान राम के मुखारविन्द की शोभा को राज्य का अभाव उसी प्रकार नहीं नष्ट कर पा रहा था, जैसे कृष्णपक्ष का क्षय चन्द्रमा की शोभा को नहीं नष्ट कर पाता। कृष्णपक्ष में चन्द्रमा क्षीण तो होते हैं पर उनकी शोभा में कोई अन्तर नहीं आता। वनगमन की इच्छा में सन्नद्ध और वसुन्धरा पृथ्वी को छोड़ते हुए भगवान् राम के चित्त पर किसी प्रकार की विक्रिया नहीं दिख रही है। गोस्वामी जी ने भी यही कहा कि वह भगवान् श्रीराम का मुखारविन्द, जो राज्य का लाभ सुनकर प्रसन्न नहीं और वनवास से विषण्ण नहीं उसकी शोभा मुझे मंजुल मंगल प्रदान करे—

**प्रसन्नतां या न गताभिषेकतस्तथा न मम्ले बनवासदुःखतः।**
**मुखाम्बुजश्रीरघुनन्दस्य मे सदास्तु सा मंजुलमंगलप्रदा।।**

वे निर्मल हैं, इसीलिए तो रणलीला में उनके मन पर किसी प्रकार का मल नहीं आया। वे शिव हैं राज्यलीला में राक्षसों को मारकर सारे

संसार को उन्होंने कल्याण से संयुक्त किया–

**राम राज बैठे त्रैलोका।**
**हर्षित भए गए सब सोका।।**

वे ही श्रुतियों और स्मृतियों द्वारा श्रीराम रूप से कहे गए हैं। श्रुति ने रामतापनीयोपनिषद् में उन्हें स्पष्ट कहा है–

**रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।**
**इति रामपदेनासौ परब्रह्माभिधीयते।।**

इन्हीं सत्यानन्द चिदात्मा परमात्मा में योगी लोग रमण करते हैं। इसीलिए 'राम' पद से इन्हीं परब्रह्म का श्रुति से अभिधान किया है। स्मृतियों में भी इन्हें 'राम' पद से ही कहा गया है–

**रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः।**

स्वयं भी वे स्वीकार करते हैं कि–

**राम मात्र लघु नाम हमारा।**
**परसु सहित बड़ नाम तोहारा।।**

यहाँ एक शंका हो सकती है कि इस प्रकार के व्याख्यान में तो ब्रह्म का निर्विशेषवाद ही सिद्ध होगा। क्योंकि ब्रह्म यदि 'पर' है, गुणातीत है, ज्योतिस्वरूप है, अमल है और शिव है तो वह तो निर्विशेष ही हो गया। फिर अद्वैतवादियों के ब्रह्म में और विशिष्टाद्वैतवाद के ब्रह्म में क्या अन्तर रह गया? इसका बहुत स्पष्ट उत्तर यह है कि हमारे यहाँ ब्रह्म निर्विशेष नहीं, सविशेष है। वह निर्गुण होकर भी सगुण है। वह आकारवान् होकर भी आकारों की मान्यता से परे है। इसीलिए 'यत्परं' इत्यादि कहकर 'श्रीराम' ही तो कहा गया है। विशिष्टाद्वैत की मान्यता में श्रुतियों का पूर्ण निर्वहण हो जाता है। अर्थात् वेदों में बहुत से मन्त्र ऐसे हैं, जिनको पढ़कर ऐसा लगता है कि ब्रह्म के अतिरिक्त कुछ भी नहीं है। और कहीं कहीं ऐसा लगता है जहाँ ब्रह्म सर्वरूप, सर्वरस, सर्वगन्ध है। जैसे एक ओर जहाँ कठोपनिषद् में–

**अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्।**

इत्यादि श्रुति से ब्रह्म को शब्द, स्पर्श, रूप, रस, गन्धरहित कहा गया,

वहीं सर्वरूपः, सर्वगन्धः सर्वरसः सर्वकामः इत्यादि श्रुतियों ने उन्हें सर्वरूप भी कहा। इस प्रकार परस्पर विरोधी श्रुतियों का समाधान करने के लिए एक ही पक्ष बचता है कि ब्रह्म को चिदचिद्विशिष्ट माना जाये। यदि आप कहें कि श्रुतियों में बाध्यबाधकभाव की कल्पना की जाये तो यह उचित नहीं होगा क्योंकि बाध्यबाधकभाव की कल्पना में किसी को प्रामाणिक मानना पड़ेगा और किसी में अप्रामाण्य मानना पड़ेगा। सूत्रों के सम्बन्ध में ऐसा कहना उचित है क्योंकि वहाँ संकोच विकास समूह है। उत्सर्ग अपवाद सम्भव है पर श्रुतियों का तो एक-एक अक्षर प्रामाणिक होता है इसलिए वहाँ बाध्यबाधकभाव की कल्पना निराधार और नास्तिकवाद को ही बढ़ावा देगी। अतएव विशिष्टाद्वैतसिद्धान्त मानना ही उचित होगा। इससे दोनों श्रुतियों का निर्वहण हो जायेगा। जहाँ श्रुतियाँ द्वैत का प्रतिपादन कर रही हैं वहाँ जीव और ब्रह्म में स्वरूपतः भेद माना जायेगा और जहाँ श्रुतियाँ अद्वैत का प्रतिपादन कर रही हैं वहाँ सम्बन्धनिबन्धना एकता स्वीकारी जायेगी। अर्थात् सिद्धान्त में जीवात्मा स्वरूप से तो परमात्मा से भिन्न है परन्तु सम्बन्ध से अभिन्न है।

अब यहाँ यह जिज्ञासा हो सकती है कि सम्बन्धनिबन्धना एकता में क्या प्रमाण है? इसके लिए श्रुति स्मृति दोनों ही प्रमाण हैं। श्रुति ने भी कहा—

**तत्र को मोहः कः शोकः एकत्वमनुपश्यतः।**

और स्मृति भी—

**ऐक्यं सौहृदमेव च।**

कहकर ऐक्य शब्द को सम्बन्ध का पर्याय ही मानती है। श्रीमद्भागवत के सप्तमस्कन्ध में जहाँ नारद जी ने चित्त भ्रम के कुछ मानस भावों की चर्चा की, उसमें सम्बन्ध की भी चर्चा की। और उसी सम्बन्ध को दशम स्कन्ध में वेदव्यास जी ने ऐक्य कहकर सम्बोधित किया। जैसे—

**गोप्यः कामाद् भयात्कंसो द्वेषाच्चैद्यादयो नृपाः।**
**सम्बन्धाद् वृष्णयो यूयं स्नेहाद्भक्त्या वयं विभो।**
**कतमोऽपि न बेनः स्यात् पंचानां पुरुषं प्रति।**
**तस्मात्केनाप्युपायेन मनः कृष्णे निवेशये।**

इसी सिद्धान्तका उद्धरण देने के लिए दशम स्कन्ध में शुकाचार्य कहते हैं कि—

**कामं क्रोधं भयं द्वेषं ऐक्यं सौहृदमेव च।**
**नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते।।**

यहाँ ऐक्य शब्द की व्याख्या करते हुए स्वयं श्रीधराचार्य स्वामी कहते हैं—**ऐक्यं सम्बन्धः।**

वाल्मीकीय रामायण के सुन्दरकाण्ड में भी श्रीराम की संक्षिप्त कथा सुनाते हुए हनुमान जी श्रीराम और सुग्रीव की एकता का वर्णन करते हैं— **राम सुग्रीवयोरेवं देव्यैक्यं समपद्यत।** इसका तात्पर्य यही है कि ऐक्य शब्द यहाँ सम्बन्धवाचक है स्वरूपवाचक नहीं। जीव स्वरूपतः ब्रह्म से एक नहीं हो सकता परन्तु सम्बन्ध से एक होता है। और वह एकत्व विशिष्टाद्वैतवाद सिद्धान्त के बिना सम्भव नहीं हो सकेगा। विशिष्टाद्वैतवाद सिद्धान्त में तीन तत्त्व स्वीकारे गए हैं—

**सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्।**

जिसमें जीवभोक्ता है, जगत् भोग्य है और परमात्मा प्रेरक हैं। अर्थात् एक चित् है, एक अचित् है और एक इन दोनों से विशिष्ट है। जीव चित् है वह चेतन है वह चयनकर्ता है, प्रकृति अचित् है वह केवल परमात्मा का ही चयन करती है संसार का नहीं। और परमात्मा इन दोनों से विशिष्ट है। चित् और अचित् ये दोनों परमात्मा के विशेषण हैं। इनमें शरीरशरीरीभाव सम्बन्ध है। इसीलिए अन्तर्यामी ब्राह्मण में बृहदारण्यकोपनिषद अन्तर्यामी ब्राह्मण में २३ मन्त्रों में भगवान् के शरीर का निरूपण किया। इसमें—

**यस्य पृथ्वी शरीरम्, यस्यापः शरीरम्, यस्याग्निः शरीरम्, यस्य वायुः शरीरम्** इत्यादि।

इसमें 'विज्ञानं शरीरम्' कहकर जीवात्मा को ही श्रुति ने परमात्मा का शरीर कहा है। 'यस्य विज्ञानं शरीरम्' शतपथब्राह्मण में इसी का अनुवाद करते हुए श्रुति कहती है—'यस्यात्मा शरीरम्'। इसलिए यहाँ विज्ञान शब्द आत्मा का वाचक है। अर्थात् जीवात्मा भी परमात्मा का शरीर है। इस प्रकार जीवात्मा और परमात्मा में शरीरशरीरीभाव सम्बन्ध है और जब ये

दोनों जीवात्मा और प्रकृति परमात्मा के विशेषण हैं तब इनकी स्वतः कोई सत्ता नहीं है। जैसे अप्रधान का कभी भी परिगणन नहीं होता। किसी ने कहा-'राजा आगच्छति' राजा आ रहे हैं तो इसका यह तात्पर्य नहीं हुआ केवल राजा ही आते होंगे, उनके परिकर भी आ रहे होंगे। परन्तु व्यपदेश प्रधान में होता है। इसी प्रकार जहाँ भी श्रुति ने एकत्व का प्रतिपादन किया है वह इसी दृष्टि से किया है, अप्रधान की गणना उसने नहीं की। और जहाँ श्रुति बहुत्व का प्रतिपादन कर रही हो वहाँ इन तीनों तत्त्वों को अलग-अलग स्वरूपतः भिन्न मानकर ऐसा किया है। अब यहाँ यह जिज्ञासा होती है कि जीव एवं ब्रह्म की भिन्नता में क्या प्रमाण है? तो श्रुति ने स्पष्ट कहा-

**नित्यो नित्यानां चेतनश्चेतनानाम्**
**एको बहूनां यो विदधाति कामान्।**
**तमात्मस्थं येऽनु पश्यन्ति धीरा**
**स्तेषां शान्तिः शाश्वती नेतरेषाम्॥**

अर्थात् परमात्मा भी नित्य है और जीवात्मा भी नित्य है। परमात्मा भी चेतन है और जीवात्मा भी चेतन है। परमात्मा एक है, जीवात्मा बहुत हैं। परमात्मा नित्य, चेतन और एक होकर नित्य, चेतन और बहुत जीवों की सभी कामनाओं की पूर्ति करते हैं। उनको अपने ही साथ हृदय देश में जो साक्षात्कार करते हैं उन्हीं को शाश्वत शान्ति मिलती है अन्य को नहीं। यहाँ षष्ठी विभक्ति का तीन बार प्रयोग किया गया है। और इसका स्पष्ट तात्पर्य यह है कि षष्ठी सम्बन्धमूलक होती है। तीन बार षष्ठी का प्रयोग करके श्रुति ने कह दिया कि जीवात्मा का परमात्मा से तीनों कालों में नित्य सम्बन्ध है। परमात्मा जीवात्मा के नित्य सम्बन्धी सदा सिद्ध है। कभी उनका सम्बन्ध विच्छेद नहीं होता। जीवात्मा बहुत हैं और परमात्मा एक है। इसलिए श्रुति ने-'एको बहूनाम्' कहा। और इसी तात्पर्य के आधार पर भगवद्गीता में भी भगवान् दूसरे अध्याय के १२वें श्लोक में कहते हैं कि-

**नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः।**
**न चैव न भविष्यामः सर्वे वयमतः परम्॥**

हे अर्जुन! यह भी सम्भव नहीं है कि इससे पहले मैं नहीं था या तुम

नहीं थे या ये राजा नहीं थे। और यह भी सम्भव नहीं है कि पश्चात् मैं तुम और ये राजा अर्थात् हम सब नहीं रहेंगे। हम अभी भी हैं, पहले भी थे, पश्चात् भी रहेंगे। इससे स्पष्ट हो जाता है कि जीवात्मा और परमात्मा दोनों नित्य हैं दोनों अविनाशी हैं। इनका नाश नहीं होता। यहाँ 'इमे' कहकर अहं कहकर त्वं कहकर भगवान ने जीवात्मा परमात्मा से स्वरूप से भिन्न है वह नित्य भी है वह बहुत है और अणु है। अर्थात् जीवात्मा अणु होकर अनेक होकर चेतन है और परमात्मा एक तथा व्यापक होकर चेतन है। इसलिए श्वेताश्वतरोपनिषद् में श्रुति भगवती ने स्पष्ट कहा–

**बालाग्रशतभागस्य शतधा कल्पितस्य च।**
**भागो जीव सः विज्ञेयः ततोऽनन्त्याय कल्पते॥**

बाल के सौंवे भाग का भी जो सौवाँ भाग है, बस जीव का उतना ही बड़ा आकार है। वह परमात्मा की सेवा करके ही अनन्त बन सकता है। इसलिए जीवात्मा में अणुवाद स्वीकार करते हुए भगवान ने भी जैसे कहा–

**देहिनोऽस्मिन् यथादेहे कौमारं यौवनं जरा।**
**तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति॥**

अर्थात् जिस प्रकार इस शरीर में बाल, युवा और वृद्धावस्था आती है, उसी प्रकार यह जीवात्मा भी एक शरीर को छोड़कर दूसरे शरीर को प्राप्त कर लेता है। इसमें धीर कभी मोहित नहीं होते। इसका तात्पर्य यही है कि जो व्यापक होगा, वह एक शरीर को छोड़कर दूसरे शरीर को कैसे प्राप्त कर सकेगा क्योंकि व्यापक उसे कहते हैं जो एक साथ एक ही समय में सर्वत्र रहता है। वह किसी को छोड़ नहीं सकता और किसी को पकड़ नहीं सकता। वह तो सर्वत्र रहता ही है। परन्तु जीवात्मा एक शरीर को छोड़कर अन्य शरीर को स्वीकार करता है। इससे इसका अणुत्व सिद्ध हो जाता है। और आगे चलकर भी–

**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः।**

इस श्लोक में 'सर्वगतःस्थाणुः' कहा गया है। सर्वगते परमात्मनि तिष्ठतीति सर्वगतस्थः सर्वगतस्थश्चासौ अणुः इति सर्वगतस्थाणुः। सर्वगत सर्वव्यापक परमात्मा के साथ रहकर भी यह जीवात्मा अणु है। और इसीलिए

ब्रह्मसूत्र में–'अणवश्च' कहा गया है। जीवात्मा परमात्मा से स्वरूपतः भिन्न है, अणु है, चेतन है और नित्य है।

विशिष्टाद्वैतवाद की परम्परा में ब्रह्म दो प्रकार का है– कारणब्रह्म और कार्यब्रह्म। कारणब्रह्म वह है जो साकेत वैकुण्ठ, गोलोकादि में विराजता है और कार्यब्रह्म इस संसार में जीवात्मा के साथ आता है।

**'अनेन जीवधनेन सह प्रविश्य नामरूपे व्याकरवाणि'**

'परमात्मा सङ्कल्प करते हैं कि इस जीवात्मा के साथ प्रविष्ट होकर मैं नामरूप का व्याकरण करूँ' इसलिए ब्रह्म कारण और कार्य भेद से दो प्रकार कर हुआ। परन्तु दोनों परिस्थितियों में परमात्मा चित् और अचित् इन दोनों विशेषणों से युक्त रहते हैं। अतएव विशिष्टाद्वैतवाद का निर्वचन करते हुए आचार्य कहते हैं–

**विशिष्टं च विशिष्टं च विशिष्टे तयोरद्वैतं विशिष्टाद्वैतं तद् वदति व्यवस्थापयति इति विशिष्टाद्वैतवादः।अर्थात् विशिष्ट कारणब्रह्म और विशिष्ट कार्यब्रह्म इन दोनों में तत्त्वतः एकता होती है इसलिए विशिष्ट ब्रह्म का अद्वैत विशिष्ट दो ब्रह्मों का अद्वैत होता है न कि जीवात्मा और परमात्मा का। इस सिद्धान्त के अनुसार ब्रह्म निर्विशेष कभी नहीं हो सकता। वह निर्गुण होकर भी सगुण होता है। व्यापक होकर भी व्याप्य बन लेता है, निरञ्जन होकर भी साञ्जन बन लेता है, विनोदरहित सविनोदवद् बर्ताव करता है, अजन्मा होकर भी भक्त के प्रेमवश जन्म में ले लेता है।**

**यत्परं यद्गुणातीतं यज्ज्योतिरमलं शिवम्।**
**तदेव परमं तत्त्वं कैवल्यपदकारणम्॥**

इस वाक्य से स्पष्ट हुआ कि भगवान् राम प्राकृत गुणों से रहित होकर भी सकलकल्याणगुणगणैकनिलय हैं, प्राकृत आकारों से रहित होकर भी वे निरन्तर दिव्य आकारसम्पन्न हैं इसलिए ब्रह्म में निर्विशेषवाद की शङ्का ही नहीं हो सकती॥श्री॥



**श्रीरामेति परं जाप्यं तारकं ब्रह्मसंज्ञकम्।**
**ब्रह्महत्यादि पापघ्नमिति वेदविदो विदुः॥६॥**

**रा०कृ०भा०–**श्रीराम इति परं जाप्यं तदेव तारकं तदेव ब्रह्मसंज्ञकम्

युधिष्ठिरेण किं परं जाप्यं इति यो द्वितीयः प्रश्नो विहितस्तस्योत्तरं ददानो भगवान् व्यासः प्राह–श्रीराम इत्येव परं जाप्यम्। अन्ये केचनापि मन्त्राः एतत्समतां नार्हन्ति। इदमेव सर्वतः श्रेष्ठम् इदमेव सर्वत उत्कृष्टम्। यतो हि अत्रैव सर्वेषामधिकारः। तथा च स्मृतिः–

**रामेति वर्णद्वयमादरेण जपन् सदा जीव उपैति मुक्तिम्।**
**कलौ युगे कल्मषमानसानां अन्यत्र धर्मे खलु नाधिकारः॥**

अर्थात् राम रामेति जपन् जीवः मुक्तिं प्राप्नोति। कल्मषयुक्तमानसानां कृते कलौयुगे अन्यस्मिन् धर्मे नाधिकारः। अन्येषां मन्त्राणां कृते अधिकारमीमांसा किन्तु 'राम नाम' तु एवंविधं यत् अत्र सर्वेऽप्यधिकृताः। बृहस्पतिमारभ्य पामरपर्यन्तं समेषां प्राणिनां रामनामजपेऽधिकारः इत्येव राद्धान्तः। किं बहुना, स्वयमेव भगवान् शिवः श्रीराममन्त्रं सर्वेभ्योऽपि मन्त्रेभ्यः समधिकं ब्रवीति। तद्यथा पाद्मे–

**राम रामेति रामेति रमे रामे मनोरमे।**
**सहस्रनामता तुल्यं श्रीराम नाम वरानने॥**

भगवतीं पार्वतीं सम्बोधयन् शिवः प्राह–

अर्थात् हे मनोरमे अहं रामे रमे। सहस्रनामतातुल्यं राम, रामेति, रामेति रामनाम मे वरानने। हे मनोरमे प्रिये पार्वति! अहं स्वयं रामे रमे रमणं करोमि। एवं च सहस्रनामतातुल्यं राम रामेति रामेति रामनाम मे वरानने। श्रीरामचन्द्रस्याप्यनेकानि नामानि किन्तु सर्वेभ्योऽप्यधिकतरं श्रीराम नाम। अतः प्राह– सहस्रनामता तुल्यं सहस्रनाम्नां सदृशम्। तथाहि–सहस्रनाम्नां समूहः सहस्रनामता सहस्रनामतया तुल्यं इति सहस्रनामतातुल्यम् सहस्रनाम्नां सदृशम्। ननु 'ग्रामजनबन्धुभ्यस्तल्' इति सूत्रेण ग्रामजनबन्धुशब्देभ्य एव समूहार्थे तल्प्रत्यय विधानात् अत्र कथं तल् प्रत्ययः? इति चेन्न। 'बहुलं छन्दसि' इति सूत्रात् बहुलग्रहणानुवृत्तिसामर्थ्यात् नामशब्दादपि तल् विधानात् दोषपरिहारः। एवं सहस्रनामानि यान्यपराणि गणपतिसूर्यशिवादीनां तेषां यः समूहः तया तुल्यं रामनाम सहस्रनामतातुल्यं रामनाम वरानने। रामस्यापि अपराणि यानि सहस्रनामानि तैः केवलं राम राम इति

रामनामतुल्यम्। रामस्य नाम रामनाम, राम चासौ नाम इति न, राम च तन्नाम इति च न। अतएव कथितं राम राम इति रामेति राम नाम। राम नाम इत्येव उच्चार्यमाणंयद्रामस्य नाम तत् सहस्रनामतया तुल्यम् इत्येव तदीयोऽभिप्रायः। एवं भगवतः शिवस्य श्रीमुखात् स्वयमेव निस्सृतत्वात् श्रीराम नाम सर्वतोऽधिकं तदेव परं जाप्यम्। अत्र बहवोऽप्यर्थाः कर्तुं शक्यन्ते। तद् यथा-रामराः इति पृथक्पदम्। अर्थात् रामः रामचन्द्रः राः धनं यस्य सः रामराः अत्र 'रायो हलि' इत्यनेन रैशब्दस्य ऐकारस्याकारः। अहं रामनामैव यस्य सम्पत्तिः तथाभूतो रामराः अहं अतिरामे अतिक्रान्तः रामः परशुरामः येन स अतिरामः तस्मिन् अतिरामे अतिक्रान्तपरशुरामे रामे अहं अतिरमे अतिशयेन रमे। एवं हे मनोरमे मे वरानने सहस्रनामतातुल्यं राम नाम। तात्पर्यमेतत्-राम एव मदीया सम्पत्तिः अहं च अतिक्रान्तभार्गवे मनोरमे रामे अत्यन्तं यथा स्यात्तथा रमे। एवं मे वरानने श्रेष्ठे मुखे सहस्रनामतातुल्यं राम नाम। इममंर्थमेव गोस्वामितुलसीदासमहाराजोऽपि समर्थयते। तथा च-

**श्रीमच्छम्भुमुखेन्दुसुन्दरवरे संशोभितं सर्वदा।**

इत्येव किष्किन्धाकाण्डमङ्गलाचरणे गोस्वामितुलसीदासो भणति। अपरञ्च-इह रमेरा इति तृतीयैकवचनान्तम् अर्थात् हे रमेरा मे मनोरमे राम रामेति रामेति सहस्रनामतातुल्यं रामनाम मे वरानने। रमालक्ष्मी तामपि ईरयति निजस्वरूपेण कम्पयति इतिरमेः तया रमेरा अर्थात् लक्ष्मी-कम्पनशीलसौन्दर्यसम्पत्त्या मे मनोरमे मम मनोरमणकारिणि पार्वति! मे मम वरानने श्रेष्ठे मुखे। राम रामेति रामेति सहस्रनामतातुल्यं रामनाम अर्थात् रामस्य रामचन्द्रस्य रामा पत्नी सीता ताम् एति गच्छति धारणार्थम् इति राम रामेति तस्य रामं रमणं यत्र तथाभूता या लङ्का तत्र एति गच्छति इति राम रामेति रामेति। नामनामिनोरभेदात् अत्र जीवत्वम् एवम्भूतं यत् सहस्रनामतातुल्यं सहस्रनाम्नां सदृशं रामनाम तदेव मे वरानने।

अस्य श्लोकस्य मीमांसया श्रीरामस्य श्रीरामनाम्नश्च परजाप्यत्वं प्रतिपादितं भवति। इदमेव तारकं संसारतारकत्वात् इदमेव ब्रह्मसंज्ञितम् वेद-तुल्यम्। अतएव गोस्वामितुलसीदासमहाराजाः अपि स्पष्टं कथयन्ति-

**ब्रह्माम्भोधिसमुद्भवं कलिमलप्रध्वंसनं चाव्ययं**
**श्रीमच्छम्भुमुखेन्दुसुन्दरवरे संशोभितं सर्वदा।**
**संसारामयभेषजं सुखकरं श्रीजानकीजीवनं**
**धन्यास्ते कृतिनः पिबन्ति सततं श्रीरामनामामृतम्॥**

एवम्भूतं यद् रामनाम तत् परं जाप्यम् श्रेष्ठं जाप्यम्। किम्बहुना, अन्येषु मन्त्रेषु स्वरवर्णविवेको भवति तथा चाह श्रुतिः—

**दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥**

इह आद्यादित्वात् उभयत्र 'तसि' प्रत्ययः। स्वरेण वर्णेन च दुष्टः दोषग्रस्तः शब्दः मिथ्याप्रयुक्तः मिथ्यासंकल्पतः प्रयुज्यमानः सन् तमर्थम् अभिप्सितमर्थं नैवाह न प्रकटयति। स शब्दोः वाग्वज्रं भूत्वा यजमानं हिनस्ति हन्ति। यथा स्वरतोऽपराधात् स्वरस्य अपराधात् इन्द्रशत्रुर्हत इति श्रौतहार्दं यत् कदाचित् यदि शब्दः स्वरेण वर्णेन वा दोषग्रस्तो भवति मिथ्यासंकल्पतश्च प्रयुज्यते तर्हि सः तादृशमर्थमभीप्सितं न कथयति। वाग्वज्रश्च भूत्वा सः यजमानमेव हिनस्ति। यथा स्वरस्यापराधेनैव इन्द्रशत्रो विवर्धस्व इति मन्त्रो यजमानमेव हृतवान्। श्रयते यत् विश्वरूप वधजातमन्युः तत्पिता त्वष्टा इन्द्रं हन्तुं एकं यज्ञं आभिचारात्मकं 'इन्द्रशत्रो विवर्धस्व' इति मन्त्रेण। तत्र इन्द्रस्य शत्रुः इन्द्रशत्रुः तत्सम्बुद्धौ इन्द्रशत्रो विवर्धस्व इति तत्पुरुषसमाससूचक समासात्तोदात्त प्रयोगेण यक्ष्यमाणस्य त्वष्टुः याजकेन अवैयाकरणत्वात् बहुव्रीहि प्रकृतिमाद्युदात्तं प्रयुज्य जपः कृतः। अर्थात् इन्द्रः शत्रुः शातयिता यस्य एवंभूतस्त्वं विवर्धस्व। तात्पर्यमेतत्–त्वं प्रकामं विवर्धस्व किन्तु त्वाम् इन्द्रः शातयिष्यतीति। जपान्ते तादृशमेव जातम्। अर्थात् स्वरदोषादेव यजमानस्य त्वष्टुः नाभीप्सितं फलमभूत्। एवं वर्णदोषादपि बहवो अनर्थाः भवन्ति। आख्यायिकैका श्रूयते–केनचित्सकामयाजकेन स्वकीयपतन्या रक्षणार्थं रोगग्रस्तायाः 'भार्यां रक्षतु भैरवी' इति सम्पुटेन दुर्गापाठः कारितः। अवैयाकरणत्वात् पाठकस्यवृद्धत्वाच्च 'भार्यां रक्षतु भैरवी' इत्यस्य स्थाने भार्यां भक्षतु भैरवी' इति अनुचितप्रयोगात् भगवत्या न दृष्टस्तदीयो भावः। जपान्ते यजमानस्य भार्या मृता। किन्तु श्रीरामनामजपे नैतादृक् प्रतिबन्धः। अत्र तु

व्यत्यस्ताक्षरे जपेऽपि कल्याणमेव भवति। 'मरेति जप सर्वदा' स्पष्टं श्रूयते महर्षिर्वाल्मीकिः रामेत्यस्य स्थाने 'मरा' इत्येव जप्तवान्। तत्र 'मरा' इत्यस्यैव जपेन महर्षेर्वाल्मीकेः कल्याणं जातम्। साक्षाद् ब्रह्मर्षित्वमगमत् स्वयमेव 'व्यत्यस्ताक्षरमादिशन्' इत्यध्यात्मरामायणे **'मरेति जप सर्वदा'** इति च भविष्योत्तरपुराणे वेदव्यासः प्राह। ननु सकलशास्त्रार्थतत्वज्ञाः सप्तर्षयः महर्षये वाल्मीकये 'मरेति' व्यत्तस्ताक्षरं कथं समुपादिशन् इति चेत्, श्रूयताम्। वस्तुतः वाल्मीकेर्जीवनमनोविज्ञानमनुसृत्यैव सप्तर्षिभिः एवंविधं कृतं भवेत्। वाल्मीकिः भयङ्करपापभाजनः अपराधप्रियश्च दस्युभूतप्रकृतित्वात् निहतानेकब्राह्मणजनितपापमलीमसचेतस्त्वाच्च महर्षेः उद्धारः। कदाचित् कर्तुं न शक्यं स्याद् भगवता। आचार्यं विना गोविन्दोऽपि जीवस्योद्धारणे न क्षमते। रामनाम्नि च रेफस्य अर्थो रामः आकारस्य अर्थश्च सीता मकारस्य चार्थः लक्ष्मण अतएव—

**रकारे रामचन्द्रः स्यात् मकारे लक्ष्मणः स्वराट्।**
**तयोः संयोजनार्थाय सीता आकार उच्यते।।**

इति स्मृतेः मकारवाच्यलक्ष्मणस्य प्राक् स्मरणम्। यतो हि लक्ष्मणः खलु जीवाचार्यः तस्य कृपया महर्षेः पापनाशः सम्भवः 'आचार्यवान् पुरुषो वेद'। यदि वाल्मीकिर्भगवन्तं वेत्स्यति तदा तेन आचार्यवता प्रशस्ताचार्यवता भवितव्यम् प्रशस्ताचार्यश्च लक्ष्मणो जीवाचार्यः स च मकारवाच्यः इति हेतो स्तत्र मकारवाच्यलक्ष्मणस्मरणधिया सप्तर्षिभिस्तस्मै व्यत्यस्ताक्षरं प्रदिष्टम्। एवं व्यत्यस्ताक्षरोपदेशात् तत्र 'मरा' इत्येव रामनामस्थाने उपदिष्टम्। एवमेव 'मरेति जप सर्वदे' त्यत्र मकारस्योपदेशात् 'मरा' इत्यस्य जपेन लब्धसिद्धित्वाच्च महषेः मन्ये प्रथमकाव्यस्य स्फुरणमपि मकारस्मरणपूर्वकम्—

**मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।**

इत्येव मे प्रतिभाति। तस्मात् अन्येषां मन्त्राणां स्वरवर्णप्रतिबन्ध बाहुल्यात् अधिकारिमीमांसा गहन त्वाच्च सर्वसाधारणाधिकार-विवर्जितत्वाच्च परं जाटिल्यम् किन्तु मम रामनाम्नि निरस्तसकलदोषे परिकलितसज्जनतोषे, समर्जितसकलभावुकवैष्णवजनपोषे, सकल-

कल्याणगुणगणैककोशे न कापि विप्रतिपत्तिः इति हेतोस्तत्र भगवता वेदव्यासेनापि श्रीराममन्त्रस्यैव परमजाप्यत्वमङ्गीक्रियते। संसारसागरस्य तारकमिदम्। इदमेव च तत्र साक्षाद् ब्रह्मसंज्ञकम्। ब्रह्महत्यादितापघ्नं च इत्येव वेदविदां सम्मतम्॥श्रीः॥

**रा०कृ०भा०**–परमजाप्य की मीमांसा करते हुए युधिष्ठिर के द्वितीय प्रश्न का उत्तर देते हुए भगवान वेदव्यास ने कहा–श्रीराम मन्त्र ही परमजाप्य है। यह तारक है। यही ब्रह्म है। यही ब्रह्महत्यादि भयंकर पापों का नाशक है, ऐसा वेदवेत्ता महानुभाव जानते हैं। यहाँ 'श्रीराम' इस नाम के परमजाप्यत्व में वेदव्यास का तात्पर्य यह है कि अन्य मन्त्रों में नाना प्रकार के आदिकारों की मीमांसाएँ होती हैं। स्वर, वर्ण आदि की व्यवस्थाएँ होती हैं, जो सामान्य जीव के वश की नहीं होतीं। वेदमन्त्रों में स्वर की गहन परम्परा जिसे व्यक्ति शीघ्रता से धारण भी नहीं कर पाता और थोड़ा सा दोष होने पर भयङ्कर अनर्थों की आशङ्का हो जाती है। श्रुति ने भी यही कहा है–यदि मन्त्र स्वर अथवा वर्णों से दोषग्रस्त हो जाए और उच्चारण करने वाले का सङ्कल्प ठीक नहीं तो वह अभीसिप्त अर्थ नहीं कह पाता। वह वाणी का वज्र बनकर यजमान को नष्ट कर डालता है। जैसे स्वर के अपराध से वृत्रासुर का जीवन संकट में पड़ गया। वैदिक इतिहास में ऐसी आख्यायिका आती है कि जब इन्द्र ने त्वष्टा के पुत्र तथा अपने पुरोहित विश्वरूप का वध कर डाला तब क्रुद्ध होकर त्वष्टा ने इन्द्र को मारने के लिए 'इन्द्रशत्रो विवर्धस्व' इस मन्त्र का आभिचारिक प्रयोग करके यज्ञ किया। किन्तु व्याकरण ज्ञान न होने के कारण यज्वाओं ने त्वष्टा की मनोदशा के अनुसार मन्त्र का प्रयोग नहीं किया अर्थात् त्वष्टा तत्पुरुष समास के अनुसार इन्द्रस्य शत्रुः इन्द्रशत्रुः यह विग्रह करके समासान्तोदात्त चाहते थे। अर्थात् इन्द्र के शत्रु वृत्रासुर तुम बढ़ो। परन्तु व्याकरण ज्ञान के अभाव में यज्वाओं ने बहुब्रीहि समास का अर्थ कहनेवाले बहुब्रीहि प्राकृतिक आद्युदात्त का प्रयोग कर दिया। जिसका अर्थ होता है इन्द्र हो नाशक जिसका ऐसे वृत्रासुर तुम बढ़ो। इसी अशुद्ध प्रयोग के कारण युद्ध में वृत्रासुर का वध हो गया। यह भी सुना जाता है कि एक व्यक्ति की पत्नी रुग्ण थीं। उन्हें स्वस्थ करने के लिए उसने 'भार्यां

रक्षतु भैरवी' सम्पुट लगाकर दुर्गासप्तशती का अनुष्ठान कराया। पण्डित महोदय भी व्याकरणशून्य थे और वृद्ध भी थे। उन्होंने भ्रम और भूल के कारण 'भार्यां रक्षतु भैरवी' के स्थान पर 'भार्यां भक्षतु भैरवी' कह डाला और भगवती जी ने मन्त्र के आधार पर अनुष्ठान के अन्त में यजमान की भार्या को ही भक्ष लिया। अर्थात् यजमान की भार्या मर गई। उन्होंने करनेवाले का हृदय नहीं देखा। क्योंकि यज्ञ का नियम है—

**विधिहीनस्य यज्ञस्य यजमानो विनश्यति।**

परन्तु ऐसा प्रतिबन्ध श्रीराम नाम में नहीं है। यहाँ तो किसी भी परिस्थिति में श्रीराम नाम जप करके व्यक्ति परमकल्याण को प्राप्त हो सकता है। गोस्वामी जी स्वयं कहते हैं—

**भाय कुभाय अनख आलसहू।**
**नामं जपत मंगल दिसि दसहू।।**

और लौकिक कहावत है कि—

**बैठे उठे परा उताना।**
**राम भजे सो बड़ा सयाना।।**

श्रीरामनाम का जप किसी भी परिस्थिति में किया जा सकता है। और कलियुग में तो और किसी धर्म में व्यक्ति का अधिकार ही नहीं है—

**नहिं कलि करम न भगति बिबेकू।**
**राम नाम अवलम्बन एकू।।**

दोहावली में गोस्वामी जी ने स्पष्ट कहा है कि कलियुग में पाखण्ड का प्रचार है। यहाँ प्रबल पाप के कारण जीव पामर और पतित हो रहा है। ऐसी परिस्थिति में दो ही आधार रह गए हैं— राम नाम और गंगाजी का जल। दुर्भाग्य से अब गंगाजल भी पर्यावरण की दृष्टि से दूषित सा हो रहा है। परन्तु रामनाम को कोई पर्यावरण प्रभावित नहीं कर सकता। इसलिए राम नाम का जप करके व्यक्ति परम कल्याण को प्राप्त हो सकता है। नृसिंह पुराण में भक्तप्रवर प्रह्लाद जी कहते हैं—

**राम नाम जपतां कुतोभयं सर्वतापशमनैकभेषजम्।**
**पश्य तात मम गात्रसन्निधौ पावकोऽपि सलिलायतेऽधुना।।**

अर्थात् सभी तापों को नष्ट करने के लिए एकमात्र औषधस्वरूप रामनाम का जप करने वालों को किसी से भी भय नहीं होता। हे तात! देखिए तो, मेरे शरीर के सम्मुख आकर अग्नि भी शीतल हो जाता है। इससे रामनाम की महिमा सुस्पष्ट उजागर होती है। वाराहपुराण में तो यहाँ तक कहा गया है कि एक यवन प्रातःकाल नित्यकृत्य सम्पादन के लिए जा रहा था जिसे एक सूअर के बच्चे ने धक्का दे दिया। उसने 'हराम-हराम' कहकर शरीर छोड़ा तो भी वह भगवान के लोक चला गया।

इसलिए राम नाम परम जाप्य है। यहाँ तो 'मरा' कहकर भी व्यक्ति सिद्ध हो सकता है जैसा कि महर्षि बाल्मीकि 'मरा' कहकर सिद्ध हुए—

**उलटा नाम जपत जग जाना।**
**वाल्मीकि भये ब्रह्म समाना।।**

महर्षि वाल्मीकि के सम्बन्ध में अध्यात्मरामायण एवं भविष्योत्तरपुराण में यही कहा गया है कि उन्होंने 'मरा' शब्द का ही जप किया था-

**मरेति जप सर्वदा। व्यत्यस्ताक्षरमादिशन्।**

यहाँ एक जिज्ञासा हो सकती है कि महर्षि वाल्मीकि को सप्तर्षि-यों ने 'मरा' का ही उपदेश क्यों दिया? इसका उत्तर यह है कि जीवों को मारने के कारण उनको मरा-मरा कहने का अभ्यास था। अथवा महर्षि वाल्मीकि ने बहुत भयंकर पाप किये थे। करोड़ों ब्रह्महत्याओं का पाप उन्हें लगा था। सप्तर्षि जानते हैं कि इतने बड़े पाप का प्रायश्चित्त किसी प्रकार से सम्भव नहीं है। और इनको भी राम जप करने में कठिनता हो सकती है। इसलिए उन्होंने 'मरा' का उपदेश कहकर पहले श्रीलक्ष्मण के स्मरण का उपदेश किया।

**रकारो रामचन्द्रः स्यात् मकारो लक्ष्मणः स्वराट्।**
**तयोः संयोजनार्थाय सीता आकार उच्यते।।**

राम नाम में र से श्रीराम का आ से सीताजी का एवं म से लक्ष्मणजी का बोध होता है। म लक्ष्मण का वाचक है इसीलिए जीवाचार्य लक्ष्मण का स्मरण करके इनका पाप शीघ्र समाप्त हो सकेगा। क्योंकि भगवान् से भी भगवान का दास श्रेष्ठ होता है—

**मोरे मन प्रभु अस बिस्वासा।**
**राम ते अधिक राम कर दासा।।**

यदि उल्टा नाम जप करके भी व्यक्ति ब्रह्मर्षि बन सकता है तो फिर सीधे नाम की महिमा कैसे कही जाए?

गोस्वामी जी ने रामनाम की बहुत महिमा गाई है और शास्त्रों ने भी यही कहा है कि इससे श्रेष्ठ कोई जप नहीं हो सकता। मान लो कोई श्रीकृष्ण का उपासक हो तो मेरी राय में उसे भी राम का ही जप करना चाहिए क्योंकि यह राधेश्याम का संक्षिप्त रूप है। 'रा' से राधा और 'म' से माधव ऐसा भी कहा जा सकता है। 'रा' से रामायण और 'म' से महाभारत, इन दोनों इतिहासों का भी 'राम' से ग्रहण किया जा सकता है। इसीलिए महर्षि वेदव्यास जी ने 'श्रीरामेति परं जाप्यं' कहा। यह परमजाप्य है। यह तारक है। यह साक्षात् ब्रह्म का ज्ञापक है। ब्रह्महत्यादि पापों को भी यह नष्ट कर देता है। ऐसा वेदवेत्ता लोग जानते और मानते हैं।।श्री।।

 **श्रीराम रामेति जना ये जपन्ति च सर्वदा।**
**तेषा भुक्तिश्च मुक्तिश्च भविष्यति न संशयः।।७।।**

**रा०कृ०भा०**—अधुना परमजाप्यस्य श्रीरामनाम्नः फलश्रुतिर्वर्ण्यते। अत्र तन्त्रेण उभयेषां जपरुचिमतां कृते निर्देशः। केचन युगलोपासकाः केचन च एकलोपासकाः। ये बालरूपं श्रीरामं ध्यायन्ति ते 'राम राम' इत्येव जपन्ति। ये खलु किशोररूपं श्रीराममुपासते ते 'सीताराम सीताराम' इत्येव जपन्ति तेषा मुभयेषां कृते अत्रश्लोके निर्देशः। श्रीरामपदेन सीताराम इत्येव समं अवगन्तव्यम्। श्रीशब्दः सीतायाः वाचकः। अत, 'श्रीराम' अर्थात् 'सीताराम' राम इति राम राम इत्येवं ये जनाः सर्वदा जपन्ति अर्थभावनया जपं कुर्वन्ति तेषां भुक्तिश्च मुक्तिश्च भविष्यति अत्र न संशयः। भुक्तिः भोगः। ननु भोगानां शास्त्रेषु तुच्छता वर्णिता तत्र न स्पृहा बुद्धिमतामिति चेत्? तद्यथा श्रीमद्‌भगवद्‌गीतायां स्पष्टमुक्तम्—

**ये हि संस्पर्शजा भोगाः दुखयोनय एव ते।**
**आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः।।**

ये तावत्संस्पर्शजा भोगा भवन्ति ते दुःखयोनयः भवन्ति। ते खलु

आद्यन्तवन्तः विनाशशीलाः बुधस्तेषु न रमते। भोगो रोगाय कल्पते इति चेत्? सम्यक् पृष्टम्। अत्र भुक्तिर्नाम भगवद्दत्तानन्दोपभोगः। तथा हि श्रुतिः—

यो वेद परमे व्योमन् निहितं गुहायां सोऽश्नुते सर्वान् कामान् सः ब्रह्मणा विपश्चितेति।

यः परमव्योमविहारिणं साकेतादिविहारिणं प्रभुं निजनाथत्वेन समध्यवस्यति 'श्रीराम रामेति' च अर्थानुसन्धानपूर्वकं जपति सः परमेश्वरदर्शनजनितानन्दोपभोगं करोति। परमेश्वरेण सह च देवदुर्लभं भोगं करोति। भुक्तिर्नाम भगवद्भजनानन्दानुभूतिः अथवा भगवदुचितस्वर्गीय भोगानुभूतिः मुक्तिः अन्यथारूपं विहाय स्वस्वरूपेण समवस्थितिः संसारोपरमश्च। चकारद्वयेन ज्ञानं भक्तिश्च। एवं ये जना निजोपासनारूपानुसारं 'सीताराम सीताराम' किंवा 'राम राम' इति सर्वदा जपन्ति तेषां ज्ञानं भक्तिः भगवदानन्दानुभूतिः मुक्तिश्च भविष्यति सम्पत्स्यते इत्यत्र संशयो नास्ति। 'जपन्ति' इत्यत्र 'वर्तमानसामीप्ये वर्तमानवद्वा' इति सूत्रेण आसन्न-भविष्यत्काले वर्तमानप्रयोगः॥श्रीः॥

**रा०कृ०भा०**—जो साधक सभी कालों में अपनी रुचि के अनुसार 'सीताराम सीताराम' अथवा 'राम राम' इस प्रकार निरन्तर जप करेंगे अर्थसहित चिन्तन करेंगे उनको भगवदानन्द की अनुभूति भगवदीय भोगों की प्राप्ति एवं अन्यथारूप छोड़कर स्वरूप में स्थिति अर्थात् संसार से मोक्ष, ज्ञान और भक्ति प्राप्त होगी, इसमें कोई सन्देह नहीं है। यहाँ 'श्रीराम' पद से सीताराम का संकेत है। उपासक दो प्रकार के होते हैं। कुछ लोग एकल उपासक अर्थात् केवल भगवान राम की उपासना करते हैं और कुछ लोग सीतासहित भगवान राम की उपासना करते हैं। वेदव्यास जी ने इन दोनों उपासकों को संकेतित किया कि 'सीताराम सीताराम' अथवा 'राम राम' इस प्रकार के दोनों में से कोई भी एक जप करके साधक भुक्ति और मुक्ति प्राप्त कर सकता है। यहाँ सन्देह उपस्थित हो सकता है कि भोग की शास्त्रों में निन्दा की गई है। स्वयं गीता में भगवान् श्रीकृष्ण ने कहा है कि जो विषयजन्य भोग हैं वे दुःखों को ही जन्म देते हैं और उनका आदि और अन्त दोनों निश्चित है। इसलिए विद्वान लोग इनमें नहीं रमा करते। जब

भोग की निन्दा ही की गई है तो रामनाम के जप के फलरूप में उसे क्यों स्वीकारा जा रहा है? इसका उत्तर यह है कि वेदव्यास जी का यहाँ लौकिक भोग से तात्पर्य नहीं है। उनका अलौकिक भोग से तात्पर्य है। स्वयं तैत्तरीय श्रुति कहती है-जो लोग ब्रह्म को सत्य, ज्ञान, अनन्त समझते हुए और परम व्योम तथा हृदय में विराजमान जानते हैं उनकी दृष्टि में संसार रहता ही नहीं वे तो नित्यज्ञानसम्पन्न परमात्मा के साथ भगवत्प्रसाद रूप में सभी कामनाओं का उपयोग करते हैं। उन्हें भगवान के ही समान दिव्य भोग की अनुभूति होती है और इसी भोग का वर्णन ब्रह्मसूत्र के अन्तिम अध्याय फलाध्याय में वेदव्यास जी करते हैं-उनका मानना है कि भोगमात्र में जीव को भगवान का साम्य मिल जाता है अर्थात् भगवान के समान जीव भी देवदुर्लभ भोग करता है-**'भोगमात्रसाम्यलिङ्गाच्च'**। ब्रह्मसूत्र ४-४-१८ इसलिए यहाँ भुक्ति का अर्थ भगवदानन्दोपभोग, भगवत्प्राप्तिजनित-सुखोपभोग और भगवदीय नामरूपलीलाधामजनितानन्दोपभोग से तात्पर्य है। यहाँ दो बार 'चकार' का प्रयोग करके यह भी स्पष्ट किया गया है कि उस व्यक्ति को ज्ञान और भक्ति भी प्राप्त हो जाते हैं। 'राम नाम एक ऐसा जप है जिससे व्यक्ति को प्रपत्ति के साथ साथ भक्ति, विरक्ति और भगवत्प्रबोध तीनों ही प्राप्त होते हैं।

जैसे भोजन करते समय व्यक्ति को प्रत्येक ग्रास में सन्तुष्टि, शरीर में सबलता एवं भोग के भाव का अनुभव होता है, उसी प्रकार श्रीराम नाम जप से व्यक्ति में तीनों विशेषताएँ क्रम से आती रहती हैं भगवान के प्रति परम प्रेम, भगवत्तत्त्व का ज्ञान और संसार से वैराग्य। ये तीन उसके जीवन में उपस्थित हो जाते हैं।

**भक्ति परेषानुभवो विपरक्तिरन्यत्र चैषत्रिक एककालः।**
**प्रपद्यमानस्य यथाश्नतःस्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुहासम्॥**

भागवत ११/२/४२

इसलिए सबसे श्रेष्ठ जाप राम नाम ही है। इससे बड़ा कोई जाप हो ही नहीं सकता। गोस्वामी तुलसीदास जी ने नामवन्दना प्रकरण में बारम्बार इसी पक्ष पर बल दिया। और कुछ मत करो केवल रामनाम का जप करते

जाओ। राम नाम के जप से सारी सिद्धियाँ प्राप्त हो जायेंगी। स्वयं परमात्मा का साक्षात्कार होगा। इसलिए गोस्वामी जी ने नामवन्दना का उपसंहार करते हुए कहा कि जिस प्रकार नृसिंह भगवान ने प्रह्लाद की प्रार्थना पर हिरण्यकशिपु का वध करके प्रह्लाद का पालन किया था उसी प्रकार श्रीराम नामरूप नृसिंह भगवान कलिकालरूप हिरण्यकशिपु का दमन करके जापकरूप प्रह्लाद का पालन अवश्य करेंगे।

**राम नाम नरकेसरी कनककसिपु कलिकाल।**
**जापक जन प्रहलाद जिमि पालिहिं दलि सुरसाल।।१/२७।।श्री।।**



**स्तवराजं पुरा प्रोक्तं नारदेन च धीमता।**
**तत्सर्वं सम्प्रवक्ष्यामि हरिध्यानपुरस्सरम्।।८।।**

**रा०कृ०भा०**—एवं परमतत्त्वपरमजाप्यपरमध्यानानां प्रतिपादकत्वेन श्रीरामस्तवराजमेवोपक्रमते।

वेदव्यासः प्रतिजानीते यत्–हे महाराज युधिष्ठिर! पुरा धीमता नारदेन चकारात् सनत्कुमारेण स्तवराजं प्रोक्तम्। अहं हरिध्यानपुरस्सरम् तत्सर्वं सम्प्रवक्ष्यामि।

स्तवानि स्तोत्राणि बहूनि सन्ति। तेषु स्तवेषु राजते इति स्तवराजम् सर्वासां स्तुतीनां अपेक्षया अस्मिन् महत्त्वातिशयः। सर्वाणि स्तोत्राणि नैतादृक् विशालकलेवराणि सर्वेषु स्तोत्रेषु श्रीरामस्य समग्रतया प्रतिपादनाभावात् इदं स्तवराजम्। नारम्–नराय हितं, नरस्येदं ज्ञानं तं ददातीति नारदः उताहो नारं अज्ञानं द्यति खण्डयतीति नारदः, यद्वा नारं अज्ञानं अत्तीति नारदः एवम्भूतेन प्रशस्ता धीरस्ति अस्य इति धीमान् तेन धीमता नारदेन इदं स्तवराजं पुरा पूर्वस्मिन् काले त्रेतायुगे श्रीसीताहरणप्रसङ्गे पम्पासरोवरं श्रितवन्तं भगवन्तं प्रसादयितुं धीमता नारदेन प्रोक्तम्।

मम तु इत्थमेव प्रतिभाति यद् अण्यकाण्डे यत्प्रभुनारदसंवादप्रसङ्गः तन्मूलकमिदं स्तवराजम्। सीता मृगयता सानुजेन भगवता पम्पाश्रिता पम्पासरोवरं समया वृक्षमूलमुपाश्रित्य सुखासीनं भगवन्तं मिलितुं समाययौ नारदः। स च नानाविद्यां स्तुतिं कृत्वा भगवन्तं प्रसादयामास। तद्यथा रामचरितमानसे–

**विरहवन्त भगवन्तहिं देखी। नारद उर भासोच बिसेषी।।**
**मोर साप करि अंगीकारा। सहत राम नाना दुःखभारा।।**
**ऐसे प्रभुहिं बिलोकउँ जाई। फिर न बनइ अस अवसरु आई।।**
**अस बिचारि नारद कर बीना। गए जहाँ प्रभु सुख आसीना।।**
**गावत राम चरित मृदु बानी। प्रेम सहित बहु भाँति बखानी।।**
**करत दण्डवत लिए उठाई। राखे बहुत बार उर लाई।।**
**स्वागत पूँछि निकट बैठारे। लछिमन सादर चरन पखारे।।**
**नाना बिधि बिनती करि प्रभु प्रसन्न जियँ जानि।**
**नारद बोले बचन तब जोरि सरोरुह पानि।।**

मानस अर०४०

गोस्वामितुलसीदासोऽपि श्रीरामस्तवराजतः पूर्णतया प्रभावितः प्रतीयते। रामस्तवराजे प्रयुक्तशब्दानां श्रीरामचरितमानसे प्राचुर्येण दर्शनात्। तद्यथा-सिद्धान्ते यथा श्रीरामचन्द्रस्य परत्वं रामस्तवराजे प्रतिपादितं तथैव गोस्वामितुलसीदासवर्येण। यथा श्रीरामस्तवराजे सर्वदेवमयः श्रीरामः प्रतिपादितः तथैव गोस्वामितुलसीदासेनापि। एवं श्रीरामस्तवराजे प्रयुक्ताः कतिपये उदाहरणविशेषाः शब्दमयाः प्रस्तूयन्ते। यथा–

**सत्यसन्धं जितक्रोधं शरणागतवत्सलम्।** रामस्तवराज-४४

**सत्यसन्ध प्रभु बधकरि एही।**
**आनहु चर्म कहति बैदेही।।**

मानस ३/२७/५

**सुनि प्रभुबचन हरषि हनुमाना।**
**शरणागतबच्छल भगवाना।।**

मानस ५/४३/९

एवम्–

**लोकाभिरामं रघुवंशनाथम्।**

तथैव– **नमामि रामं रघुवंशनाथम्।**
**इदं प्रियं नाथ वरं प्रयच्छ**
**भक्तिं प्रयच्छ रघुपुंगव निर्भरां मे।**

**स्थावरा जंगमाश्चैव त्वमेव रघुनायक।**
**पुनि मन बचन करम रघुनायक।**
**चरण कमल बन्दउँ सब लायक।।**

एवं बहूनि उदाहरणानि प्रस्तोतुं शक्यन्ते। अतएव प्रकृते वेदव्यासः प्राह-धीमता नारदेन पुरा चतुर्विंशत्रेतायुगे सीताहरणप्रसंगे पम्पासरोवरं समया विराजमानं श्रीरामचन्द्रं स्तुवता धीमता नारदेन स्तवराजं प्रोक्तम्। चकारात् तद्दृष्ट्वा सनत्कुमारेण मह्यं प्रोक्तम् तत्सर्वमहं हरिध्यानपुरस्सरं सम्यक् प्रवक्ष्यामि।।श्री।।

**राघवकृपाभाष्य**–हे महाराज युधिष्ठिर! चौबीसवें त्रेता के अन्त में श्रीसीताहरण के प्रसङ्ग में भगवती सीताजी का अन्वेषण करते हुए जब भगवान श्रीराम पम्पा सरोवर के पास पधारे और वहाँ एक सुन्दर वृक्षच्छाया के नीचे विराजमान हुए तब देवर्षि नारद वहाँ उपस्थित हुए और प्रभु को विरह विकल देखकर नारद के मन में क्षोभ हुआ उन्होंने विचार किया कि मेरे शाप को अंगीकार करके भगवान राम अनेक प्रकार के दुःख सह रहे हैं। ऐसे प्रभु को एक बार जाकर निहारूँ क्योंकि इतना अच्छा अवसर फिर नहीं मिल सकेगा। ऐसा विचार कर हाथ में वीणा लेकर नारद जी महाराज वहीं उपस्थित हुए जहाँ श्रीराम सुखपूर्वक आसीन थे। वे प्रेमपूर्वक भगवान श्रीराम चरित्र एवं उनकी भक्ति का बखान कर रहे थे। प्रभु ने उन्हें देखकर दण्डवत् किया और नारद ने प्रभु को उठा लिया। बहुत देर तक हृदय में लगाकर स्वागत पूछकर प्रभु ने उन्हें निकट बिठा लिया। लक्ष्मण जी ने नारद जी के चरणारविन्द का प्रक्षालन किया। अनेक प्रकार से नारद ने वहाँ विनती की। वह विनती श्रीरामस्तवराज ही प्रतीत होती है। क्योंकि श्रीरामस्तवराज के सिद्धान्त से गोस्वामी जी के बहुत से सिद्धान्त भी मिल जाते हैं और श्रीरामस्तवराज के बहुत से शब्दों का गोस्वामी जी ने भी स्वयं प्रयोग किया है। जैसे श्रीरामस्तवराज में बालरूप के ध्यान का वर्णन प्रारम्भ में किया गया है और गोस्वामी जी भी बालरूप के ध्यान का प्रारम्भ में वर्णन करते हैं। नारद जी ने ध्यान में सबसे पहले श्रीरामजी को दशरथ जी की गोद में देखा।

**पितुरंकगतं रामं इन्द्रनीलमणिप्रभम्।**

और गोस्वामीजी ने इस झाँकी का कवितावली रामायण में दो कवित्तों में बड़ी मार्मिक शैली में वर्णन किया है—

**अवधेस के द्वारे सकारे गई सुत गोद कै भूपति लै निकसे।**
**अवलोकिहौं सोच विमोचन सों ठगि सी रही जे न ठगे धिक से।**
**तुलसी मनरंजन रंजित अंजन नैन सुखंजन जातक से।**
**सजनी ससि में समसील उभै नवनील सरोरुह से बिकसे।।**
**पग नूपुर औ पहुँची करकंजनि मंजु बनी मनिमाल हिये।**
**नवनील सरोरुह पीत झगा झलकैं पुलकैं नृप गोद लिये।**
**अरविन्द सो आनन रूप मरन्द अनन्दित लोचन भृंग पिये।**
**मन में न बस्यौ अस बालक जो तुलसी जग में फल कौन जिये।।**

अर्थात् एक सखी ने दूसरी सखी से कहा कि मैं आज प्रातःकाल महाराज दशरथ जी के द्वार पर गई हुई थी। उसी समय महाराज अपने पुत्र श्रीराम को गोद में लेकर पधार रहे थे। उस शोकहारी बालक को निहारकर मैं तो ठगी सी रह गई। और जो न ठगे जा सके उन्हें धिक्कार है। अहो! मन को लुभाने वाला वह नेत्र में विराजमान अंजन और उनके नेत्र खंजन के बालकों के समान इतने सुन्दर लग रहे थे मानो चन्द्रमण्डल में समान आकारवाले नवीन दो नीले कमल विकसित हुए हों। उनके श्रीचरणों में नूपुर करकमलों में पहुँची और हृदय पर मंजुल मणिमाला विराज रही थी। नवीन नीलश्रीविग्रह पर वह पीली झगुलिया झलक रही थी। गोद में लेकर महाराज पुलकित हो रहे थे। अरविन्द कमल जैसे मुख के रूप मकरन्द को आनन्द से विभोर नेत्र पी रहे थे। ऐसा बालक यदि मन में न बसा तो फिर जग में जीने का फल ही क्या है?

इसी प्रकार जैसे श्रीरामस्तवराज में श्रीराम के परत्व का प्रतिपादन किया गया है उसी प्रकार तुलसीदास जी ने भी श्रीराम के परत्व का प्रतिपादन किया है। अर्थात् श्रीरामस्तवराज में श्रीराम का ऐश्वर्य वर्णन है

और गोस्वामी जी ने भी उनका ऐश्वर्य वर्णन ही किया है। बहुत से ऐसे शब्द हैं जो श्रीरामस्तवराज में प्रयुक्त हैं और उन्हीं को गोस्वामी जी ने भी प्रयोग किया है। जैसे—

**सत्यसन्धं जितक्रोधं शरणागतवत्सलम्।**

सत्यसन्ध शब्द को रामचरित मानस में बहुधा प्रयोग किया है—

**जौं नहिं फिरहिं धीर दोउ भाई। सत्यसन्ध दृढ़व्रत रघुराई।**

**सत्यसंध प्रभु बधि करि एही।।**

**सत्यसंध छाँडे सर लच्छा।।**

शरणागतवत्सलम्—**सुनि प्रभु वचन हरष हनुमाना।**
**सरनागत बच्छल भगवाना।।**

इसी प्रकार—**लोकाभिरामं रघुवंशनाथम्**—गोस्वामी जी कहते हैं—

**नमामि रामं रघुवंशनाथम्।**

**इदं प्रियं नाथ! वरं प्रयच्छ।**

**भक्तिं प्रयच्छ, त्वमेव रघुपुंगवः, रघुपुंगव निर्भरां मे।**

इसी प्रकार सिद्धान्तों की समीक्षा करने से ऐसा लगता है कि गोस्वामी तुलसीदास जी भी श्रीरामस्तवराज से बहुत प्रभावित थे और श्री रामस्तवराज के प्रभु—नारद संवाद प्रकरण को ही उन्होंने अरण्यकाण्ड में संकलित किया है, ऐसा मुझे लगता है।

वेदव्यास कहते हैं कि जिस प्रकार पम्पासरोवरतटविहारी भगवान श्रीराम को सन्तुष्ट करने के लिए पहले प्रशस्तबुद्धिवाले नारद जी के द्वारा यह स्तवराज कहा गया। फिर उनका दर्शन करके सनत्कुमार के द्वारा मुझे सुनाया गया। उसी प्रकार अब मैं भी भगवान के ध्यान के साथ-साथ उस स्तवराज का सम्यक् प्रवचन करूँगा, जिससे परमजाप्य, परमतत्त्व और परमध्यान का पूर्णरूपेण मर्म समझ में आ जायेगा। यहाँ हरि शब्द श्रीराम के लिए ही प्रयुक्त हुआ है।

**अथ श्रीरामस्तवराजमाहात्म्यमुपक्रमते।**

अब रामस्तवराज का उपक्रम करते हैं।

**तापत्रयाग्नि शमनं सर्वाघौघ निकृन्तनम्।**
**दारिद्रय दुःखशमनं सर्वसम्पत्करं शिवम्।।९।।**

**रा०कृ०भा०**–कीदृशं स्तवराजं सम्प्रवक्ष्यामि? इत्यपेक्षायां षड्भिर्विशेषणैर्विशिनष्टि स्तवराजम्। यथा भगवान् रामः ऐश्वर्यधर्मयशश्रीज्ञानवैराग्यभूतानां षण्णामैश्वर्याणां नित्यं निधानं वर्तते तथैव श्रीराम इव श्रीरामस्तवराजमपि षड्गुणसम्पन्नम्। अतो हेतोः स्तवराजमेतद्भगवन्मयमिति वेदव्यासस्य विवक्षितम्। इदं तापत्रयाग्नि शमनं तापानां आध्यात्मिकाधिभौतिकाधिदैविकानां त्रयं तापत्रयम् तदेवाग्निः तापत्रयाग्निः तं शमयति इति तापत्रयाग्नि शममम् बाहुलकात् कर्तरिल्युट्। सर्वाघौघनिकृन्तनम् सर्वेषां अघानां ओघः समूहः सर्वाघौघस्तंनिश्शेषेण कृन्तति छिनत्ति नाशयति इति सर्वाघौघनिकृन्तनम् दारिद्रयं च दुःखं च दारिद्रयदुःखे ते शमयति इति दारिद्र्यदुःखशमनम् सर्वासां सम्पदां करम् सर्वसम्पदः करोति तच्छीलम् एवंभूतं शिवं कल्याणमयं साक्षात्परमात्मस्वरूपं श्रीरामस्तवराजं अहं सम्प्रवक्ष्यामि।

**राघवकृपाभाष्य**–वेदव्यास जी यहाँ श्रीरामस्तवराज के लिए छः विशेषणों का प्रयोग कर रहे हैं। जिस प्रकार भगवान श्रीराम ऐश्वर्य, धर्म, यश, श्री, ज्ञान, वैराग्य इन छहों ऐश्वर्यों से नित्य सम्पन्न रहते हैं उसी प्रकार श्रीरामस्तवराज भी आगे कहे जाने वाले छहों विशेषताओं से नित्य सम्पन्न हैं। इससे श्रीरामस्तवराज भी साक्षात् भगवान हैं। हे महाराज युधिष्ठिर! जीव को आध्यात्मिक आधिदैविक अधिभौतिक ये तीनों प्रकार के ताप अग्नि के समान जलाते हैं, इन तीनों को यह समाप्त कर देता है। अर्थात् श्रीरामस्तवराज का पाठ करने से व्यक्ति दैविक, दैहिक, भौतिक इन तीनों तापों से मुक्त हो जाता है। यह सभी पापों के समूहों को काट डालता है। अर्थात् इसके जप से जीव सब पापों से मुक्त हो जाता है। श्रीरामस्तवराज का पाठ करने से व्यक्ति दारिद्र्य और दुःख इन दोनों से मुक्त हो जाता है। क्योंकि यह इन दोनों का शामक है। यह सम्पूर्ण सम्पत्तियों का उत्पादक है। अर्थात् इससे व्यक्ति को सम्पूर्ण सम्पत्ति मिल जाती है।

किम्बहुना, यह शिवरूप साक्षात् परमात्मा ही है। इसलिए श्रीरामस्तवराज का श्रद्धापूर्वक पाठ करना चाहिए।

अधुना परिशेष्यात् द्वाभ्यां विशेषणाभ्यां विशिनष्टि—

अब शेष बचे हुए दो विशेषणों से श्रीरामस्तवराज को बिशेषित करते हैं—

❀ **विज्ञानफलदं दिव्यं मोक्षैक फलसाधनम्।**
**नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम्।।१०।।**

**रा०कृ०भा०**—विज्ञानं नाम विशिष्टाद्वैतज्ञानम् तस्य विशिष्टाद्वैतज्ञानस्य फलं भगवच्चरणारविन्दप्राप्तिपुरस्सरभगवत्कैङ्कर्यं तद् ददाति इति विज्ञानफलदम् वेदान्तज्ञानस्य भगवत्कैङ्कर्यप्राप्तिरेव फलम्। अर्थपंचज्ञानपुरस्सरं स्वस्वरूपावाप्तिरेव फलम्। यद्वा अर्थपंचकस्य ज्ञानंविज्ञानस्य फलम्। तच्च स्वस्वरूप परस्वरूपोपायस्वरूपफलस्वरूपविरोधिस्वरूपाणां ज्ञानं तत्‌नित्यं ददाति इति विज्ञानफलदम्। श्रीरामस्तवराजे अर्थपञ्चकस्य पूर्णतयोपलब्धेः। तथाहि सनकादिनारदवेदव्यासादीनां भगवत्स्तोत्रकर्तृत्वदर्शनात् स्वस्वरूपज्ञानं श्रीरामस्य च स्तोत्रमहिम्ना समाविर्भावात् तत्र परस्वरूपज्ञानं श्रीरामतत्त्ववर्णनाच्च श्रीरामस्य प्राप्तये वर्णितायाः प्रवृत्तेः भक्तेश्च निरूपणात् उपायस्वरूपज्ञानं श्रीरामचरणारविन्ददर्शनात् समस्तानां क्रियाणां सफलत्व निरूपणात् फलस्वरूपज्ञानं श्रीरामस्वरूपव्यवधायकीभूत-मायातत्प्रपंचवर्णननिरूपणात् विरोधिस्वरूपज्ञानं च इति सम्पूर्णमर्थपञ्चकमत्र समासतो निर्दिष्टम् तस्मात् इदं विज्ञानफलदम्। वा, विज्ञानं बुद्धिः तस्यफलं अनाग्रहः बुद्धेः फलमनाग्रहः। तस्यापि श्रीरामस्तवराजमहिम्नोपलब्धिदर्शनात् विज्ञानफलदत्वमत्र सुस्पष्टम्। अथवा विज्ञानं नाम जीवात्मा तस्य फलं भगवत्पादारविन्ददर्शनम्। यथा श्रीमद्वाल्मीकीय रामायणस्य अयोध्याकाण्डस्य सप्तदश सर्गस्य चतुर्दशे श्लोके स्वयं भगवान् प्राचेतसः प्राह—

**यश्च रामं न पश्येत्तु यञ्च रामो न पश्यति।**
**निन्दितः सर्वलोकेषु स्वात्माप्येनं विगर्हते।।**

अर्थात् यः रामं न पश्यति यश्च भगवान् रामो नावलोकयति

कृपादृष्ट्या सः सर्वलोकेषु निन्दितः स्वात्माप्येनं विगर्हते धिक् त्वां प्राप्तमानवशरीरमपि रघुवीरकृपापात्रतां नासादयसीति। एवं जीवात्मनः फलं परमात्मप्राप्तिः परमात्मसाक्षात्कारः। यथा च श्रीमद्भागवते वेणुगीते प्राहुः श्रीव्रजाङ्गनाः –

**अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननु विवेशयतोर्वयस्यैः।**
**वक्त्रंव्रजेशसुतयोरनुवेणुजुष्टं यैर्वा निपीतमनुरक्त कटाक्षमोक्षम्।।**

भागवत १०/२१/७

गोप्यआहुः–हे सख्यः! अक्षण्वतां नेत्रवतां नेत्राणां इदमेव फलं इतः परं यत्स्यात् तत् वयं न विदामः न विद्मः। किं फलम्? इत्यत आहुः–यैः भागवतशिखामणिभिः वयस्यैः वयस्याश्च वयस्याश्च वयस्याः तैः सखीभिः सखिभिश्च सह पशून् सामान्यजीवान् अनुविवेशयतोः रासमहागोष्ठीं प्रवेशयतोः तत्र व्रजेशसुतयोः 'व्रजेशः वृषभानुश्च व्रजेशो नन्द ईर्यते' व्रजेशश्च व्रजेशश्च व्रजेशौ व्रजेशस्य सुता वृषभानुनन्दिनी राधा व्रजेशस्य सुतः नन्दनन्दनः श्रीकृष्णः तयोः व्रजेशसुतयोः राधाकृष्णयोः अनुवेणुजुष्टं आनुकूल्येन वेणुना जुष्टं पीतरसं अनुरक्त कटाक्षमोक्षं अनुरक्तेषु कटाक्षमोक्षाः यस्य एवंविधं वक्त्रं सम्मिलितराधाकृष्णमुखारविन्दद्वयं पीतं तेषामेव अक्षण्वतां अक्ष्णां फलं अपरं यदि भवेत् तर्हि वयं न विद्मः इति तत्र श्लोकार्थः। एवम्भूतं विज्ञानस्य जीवात्मनः फलं ददातीति विज्ञानफलदं दिव्यं अलौकिकं मोक्षरूपं यदेकफलं तत्साधयतीति मोक्षैकफलसाधनम्, यद्वा मोक्षस्यापि एकं फलं भक्तिः तत्फलं भक्तिरूपं साधयतीति मोक्षैकफलसाधनम्, एवम्भूतं श्रीस्तवराजमहं रामं कृष्णं रामाभिन्नं कृष्णं जगन्मयं नमस्कृत्य सम्प्रवक्ष्यामि। यद्वा अत्र अष्टौ विशेषणानि। तथाहि–तापत्रयाग्निशमनं, सर्वाघौघनिकृन्तनम्, दारिद्र्यदुःखशमनं, सर्वसम्पत्करं, शिवं, विज्ञानफलदं, दिव्यं, मोक्षैकफलसाधनमिति। एतस्य तात्पर्यमेतत् एभिरष्टाभिर्विशेषणैः भगवान् व्यासः इत्थं सङ्केतयति यद्यथा परमात्मनि अपहतपापमत्व विजरत्व विमृत्युत्व विशोकत्व, विवर्जितक्षुत्त्व, पिपासावर्जितत्व, सत्यकामत्व, सत्यसङ्कल्पत्वाख्या अष्टौ गुणाः नित्यम्, किन्तु जीवे इमे भगवत्कृपयैव समाविर्भवन्ति कदाचित्।

एभिराविर्भूतैरष्टाभिर्गुणैः सम्पन्नः सन् जीवः भोगमात्रे परमात्मनः साम्यं समधिगच्छति। इमेऽपि देवदुर्लभाः अष्टौ गुणाः श्रीरामस्तवपाठेन जीवे स्वयमेवाविर्भवन्ति इति तत्र भगवतो वेदव्यासस्य आशयः। तथाहि तापत्रयाग्निशमनं इत्यनेन अपहतपाप्मत्वम्। अपहतपाप्मा पापरहितो हि तापत्रयाग्नितो विमुक्तो भवति। सर्वाघौघनिकृन्तनं इत्यनेन विजरत्वम्, पापी हि जरया विषीदति, निष्पापः विजरो भवति। एवं दारिद्र्यदुःखशमनम् इत्यनेन विमृत्युत्वम् मृत्युमान् हि दारिद्र्यवान् दुःखवांश्च भवति। दारिद्र्यदुःखरहितः सन् मृत्युतोऽपि न बिभेति। सर्वसम्पत्करम् सर्वसम्पदभावयुक्तो हि सशोको भवति। सर्वसम्पत्करत्वे विशोकता सुतरां संघटते। शिवम् सकलकल्याणगुणगणनिलयत्वात् हि जीवः विज्ञानफलदत्वं स्वयमेव अवाप्नोति। विज्ञानफले अर्थपंचकज्ञाने प्राप्ते सति जीवः शिवस्वरूपो क्षुद्रहितो भवति। दिव्यम् इत्यनेन तावत् अपिपासः पिपासावर्जितो भवति। विज्ञानफलदत्वात् विज्ञानस्य फलमवाप्य जीवः कदापि न जिघित्सति। दिव्यत्वाच्च कदापि तं पिपापा न बाधते, नासौ पिपासति। दिव्यो हि जनः क्षुत्पिपासावर्जितो भवति। एवं शिवो हि क्षुद् विवर्जितो भवति विज्ञानफलदत्वात् सः पिपासावर्जितो भवति दिव्यत्वाच्च जीवः सत्यकामो भवति। अलौकिका हि जनाः सत्यकामाः भवन्ति। तेषां कामानां सत्यत्वोपपत्तेः। एवं मोक्षैकफलसाधनत्वे जीवः सत्यसङ्कल्पो जायते इत्यष्टाभिर्विशेषणैः श्रीरामस्तवपाठेन जीवे समाविर्भूतगुणाष्टकत्वं प्रतिपाद्यते। एवं षड्गुणगणमयं तथाचाविर्भूतगुणाष्टकप्रदपाठकर्तृकं तत्र भगवता नारदेन प्रोक्तं सनत्कुमारेण दृष्टं पुनर्वेदव्यासाय मह्यं प्रोक्तम् अलौकिकं श्रीरामस्वतराजं सम्प्रवक्ष्यामि। किं कृत्वा? इत्यत आह-नमस्कृत्य कं? इत्यत आह-रामम्। कीदृशं रामम्? साम्प्रतं कृष्णरूपेण वर्तमानत्वात् कृष्णम्। ननु रामस्तवराजे कृष्णचर्चायाः कः प्रसङ्ग इति चेत् शृणु। श्रीराम एव श्रीकृष्णः। रामाभिन्नं कृष्णं नमस्कृत्य सम्प्रवक्ष्यामि इत्यत्र पदार्थः। रामकृष्णयोर्मध्ये न कोऽपि भेदः। यः परिपूर्णतमः परात्परपरब्रह्म परमात्मा सीतापति लोकाभिरामः श्रीरामः स एव आनन्दकन्दमुकुन्दसततमुनिजन परिपीतचरणारविन्दामन्दमकरन्दसच्चिदानन्दकरुणाकन्दशोभावृन्द परमानन्दव्रजेन्द्रनन्दनशिखपिच्छमौलिः श्रीकृष्णः। त्वं कृष्णोपासकः तथापि त्वया

रामस्तवराजपाठः करणीयः। यः श्रीरामः स एव श्रीकृष्णः अतः रामाभिन्नं कृष्णं नमस्कृत्य। रामं कृष्णमित्युक्त्वाश्रीरामकृष्णयोर्मध्ये दर्शयित्वाचाभेदं वेदव्यासेन श्रीरामस्तवराजे युधिष्ठिरस्य प्रवृत्ति प्रयोजकता निगदिता। अर्थात् श्रीरामस्तवराजेनापि तवोपासनायां न व्यभिचारः। यतो हि रामकृष्णयोर्मध्ये नास्ति कश्चन भेदः। केचन श्रीकृष्णं रामतो भिन्नं मन्यन्ते कथयन्ति च श्रीकृष्णःषोडशकलावतारः श्रीरामश्च द्वादशकलावतारः श्रीकृष्णोऽवतारीति। अस्य सिद्धान्तस्य पुष्टौ समुदाहरन्ति भागवतीयं श्लोकमिमम्–

**एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।** इति तन्न। वस्तुतस्तु श्रीरामो द्वादशकलावतारः श्रीकृष्णः षोडशकलावतारः इति सिद्धान्तस्तु भ्रमपूर्णः। क्वापि शास्त्रे प्रमाणानुपलब्धेः। परमात्मनः कलाविभागस्य च सर्वतोभावेनासम्भवात्। परमात्मनश्च सकलकलाम- यत्वात्। यदि चेत्कथञ्चित् सिसाधयिषा तदा सूर्यवंशप्रसूतत्वात् सूर्यस्य च द्वादशकलाप्रसिद्धत्वात् श्रीरामे कथञ्चिद् द्वादशकलाः चन्द्रवंशे प्रसूतत्वात्– चन्द्रस्य च षोडशकलामयत्वात् श्रीकृष्णे षोड़शकलाः। यथा 'एकतोला' नामकस्य द्वादशमाशाभिः षोडशाणकाभिश्च पूर्णत्वादर्शनात्। एवं द्वयोरपि स्वस्ववंशप्रवर्तकानुरोधेन तत्तत्कलानुरोधेन च पूर्णत्वात्। ननु–

**एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्।**
**इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे।**

इति भागवतानुरोधेन सर्वेषामवताराणामपेक्षया किंवा रामस्याप्यपेक्षया कृष्णस्य भगवत्वोपपत्तेः रामकृष्णयोः सुतरां भेदः संघटत एवेति चेन्न। तत्र तुकारेण रामचन्द्रस्यापि ग्रहणात्। कृष्णः स्वयं भगवान् तुना रामोऽपि। यद्वा–'कृष्णस्तु भगवान् स्वयम्' इत्यत्र उद्देश्य विधेयभावस्वीकारेणादोषात्। प्रसिद्ध हि विधेयं भवति। कृष्णस्तु भगवान् स्वयं विधेयस्य प्रसिद्धेः सार्वजनीनत्वात् 'कृष्णमुद्दिश्य भगवत्वं तत्र विधीयते भगवत्वं श्रीरामे प्रसिद्धमेव। अतएव कृष्णात्पूर्वमपि वाल्मीकीयरामायणे श्रीरामस्य भगवत्वश्रवणात् कृष्णस्तु स्वयं भगवान् राम एव इत्यर्थकरणेन तत्र समस्तदोषपरिहारः। तद्यथा–

**धर्मात्मनो भगवतो लोके रामस्य धीमतः।**
**वृत्तं कथय वीरस्य यथा ते नारदात् श्रुतम्।।**
वाल्मी० १/२/३२

एवं कृष्णस्तु स्वयमेव भगवान् राम एव। भगवद्रामकृष्णयोर्मध्ये न कोऽपि भेदः। अतएव तु नवयोगेश्वरसम्वादे विभवानुरूपभजनव्याख्यावसरे तत्र योगेश्वरवर्यैः 'कलावपि यथा शृणु' इत्युपक्रम्य श्लोकद्वयेन रामकृष्ण-योरभेदघटितोपासना साधिता। तद्यथा—

**ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिंचिनुतं शरण्यम्।**
**भृत्यार्तिहं प्रणतपाल भवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम्।।**
**त्यक्त्वा सुदुस्त्यज सुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्यवचसा यदगादरण्यम्।**
**मायामृगं दयितयेप्सितमन्वधावद् वन्दे महापुरुष ते चरणारविन्दम्।।**

अत्र श्लोकद्वये भगवतो रामचन्द्रस्यैवोपासनं वर्णितम्। तत्र भगवतः चरणारविन्दयोर्नवगुणा ऐश्वर्यपरकाः पूर्वस्मिन् श्लोके प्रतिपादिताः उत्तरस्मिंश्च भगवतः माधुर्यपरकं गुणद्वयं प्रत्यपादि। एवं प्रणतपाल महापुरुष विशेषणाभ्यां साक्षाद् भगवतो रामचन्द्रस्यैव संकीर्तनात् कलियुगे विधेयरूपेण भगवतो रामस्यैव उपासन निर्देशात् श्रीरामावतरित्वं तस्य च सर्वातिशयित्वं स्वयमेव भागवते भगवता बादरायणेन समसूचि। 'प्रणतपाल महापुरुष' शब्दौ श्रीरामचन्द्रे एव घटेते। तत्र श्रीमद्भागवत एव पंचमस्कन्धे ऊनविंशेऽध्याये भगवतो रामचन्द्रस्य कृते महापुरुष प्रयोगदर्शनात्—ॐ नमो भगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मन उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति। तथा हि 'महापुरुष प्रणतपाल' विशेषणोयोरनुरोधेन श्रीरामस्यैवोपासना विधेयत्वेन दर्शिता यदि तदा तस्यैव सर्वावतारत्वं वर्णनीयं भविष्यतीति।

ननु श्रीरामचन्द्रस्य जन्मावसरे भागवते श्रीराघवस्य अंशावतारत्वेन शुकाचार्येण संकीर्तनात् तस्य पूर्णत्वोपपत्तौ सन्देहः इति चेत् न। तत्रत्यप्रसंगः पूर्वं सावधानतयावगन्तव्यः। तत्रत्योऽयंश्लोकः—

**तस्यापि भगवानेषः साक्षाद् ब्रह्ममयो हरिः।**
**अंशांशेन चतुर्धागात् पुत्रत्वं प्राकृतः सुरैः॥**
**रामलक्ष्मणभरत शत्रुघ्ना इति संज्ञया।**

तत्र साक्षात्पदानुरोधेन अंशावतारकल्पनस्य निर्मूलत्वेनोपादनात्। यदि तत्र 'साक्षात्' शब्दो नाभविष्यत् तदा कथंचिदंशावतारः समकल्पयिष्यत्। यद्यसौ वर्तते अतो नासावंशावतारः। तद्यथा–'तस्यापि भगवानेषः' एषः भगवान् अंशः पूर्णो वा, इत्यत आह– साक्षात्। न त्वंशावतारः। भागवते श्रीकृष्णस्य कृते बहुधा अंशावतारश्रवणम्। यथा–

**अथाहमंशभागेन देवक्याः पुत्रतां शुभे।**
**प्राप्स्यामि त्वं यशोदायां नन्दपत्न्यां भविष्यसि।**

इति दशमस्कन्धे द्वितीये, एवम्–

**अवतीर्य यदुर्वंशे भगवान् भूतभावनः**
**तत्रांशेनावतीर्णस्य विष्णोर्वीयाणि शंस नः।** १०/२

इति दशमे प्रथमे,

**अवतीर्णो हि भगवानंशेन जगदीश्वरः।** १०/१

इति दशमे त्रयस्त्रिंशे। एवं श्रीमद्भागवते शतशः श्लोकेषु श्रीकृष्णस्य अंशावतार श्रवणोपलब्धेः। वाल्मीकीयरामायणे श्रीरामस्य च सकृदप्यंशावतारानुपलब्धेः तस्य पूर्णत्वे समस्तसन्देह निरसनोपपत्तेश्च तत्र श्रुतिस्मृतिभ्यां पूर्णावतारोपपत्तेः निर्विवादम्। इह रामाभिन्नस्य कृष्णस्योपपादनं 'रामं कृष्णं जगन्मयम्' केवलं श्रीरामस्तवराजे युधिष्ठिर रुचिवर्धनार्थम्। वेदव्यासस्य विवक्षितमेतत् 'यत्त्वं चिन्तां मा कुरु' रामस्तवराजपाठं कुरु। योऽसौ तव समक्षं वर्तमानः श्रीकृष्णः स एव पुरा भगवान् रामः। तद् यथा–युधिष्ठिरस्य भूरिभाग्यं वर्णयन् गुरुर्नारदः प्राह–

**यूयं नृलोके बतभूरिभागा लोकान् पुनाना मुनयोऽभियन्ति।**
**येषां गृहानावसतीति साक्षाद् गूढं परंब्रह्म मनुष्यलिङ्गम॥**
७/१०/४८

यस्तावद् भवतःसमक्षं विराजमानो भगवान् श्रीकृष्णः स एव

त्रेतायुगे श्रीरामः। अतः रामकृष्णयोरभेदोपपादनमिह केवलं युधिष्ठिरस्य श्रीरामस्तवराजे उपासनारुचिविवर्धयिषया अधुना रामकृष्णयोर्मध्ये भेद-वादिनां संशयपंककलङ्कप्रक्षालना भवेदिति विरम्यते।

कीदृशं श्रीरामं? कृष्णं आकर्षकम्।

**कृषिर्भूवाचकःशब्दो णस्तु निर्वृतिवाचकः।**
**तयोरैक्यं परब्रह्म श्रीकृष्णेत्यभिधीयते।।**

श्रीरामकृष्णयोः परब्रह्मत्वेन भगवत्या श्रुत्यापि श्रावणोक्तेः। तद्यथा श्रीरामतापनीये–रामपदेन परब्रह्माभिधामं, गोपालतापनीये च कृष्णपदेन परब्रह्माभिधानम्–

**रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।**
**इति रामपदेनासौ परब्रह्माभिधीयते।।**

एवं कृष्णकृतेऽपि–

**कृर्षिर्भूवाचकः शब्दो णस्तु निर्वृतिवाचकः।**
**तयोरैक्यं परब्रह्म श्रीकृष्णेत्यभिधीयते।।**

एवं भगवत्या श्रुत्यैव श्रीरामकृष्णयोः परब्रह्मत्वाभिधानात् द्वयोर्भेदकल्पने मानाभावात् द्वयोरभेदो निर्विवादः। कीदृशं श्रीरामम्? द्वापरे श्रीकृष्णरूपेण समवतीर्णम्। अथ च जगतःपृथक् जगदन्तर्भूतं जगद्रूपं वा इत्यपेक्षायामाह– 'जगन्मयम्' इह विकारे न मयट् प्रत्ययः भगवतो निर्विकारत्वात्।

**चिदानन्दमय देह तुम्हारी।**
**विगत विकार जान अधिकारी।।**

भगवतो न विवर्तवादो न वा विकारवादः। किं तर्हि? परिणामवादः। अतएव वेदव्यासः ब्रह्मसूत्रे प्राह–**परिणामात्**। न च परिणामवादे स्वीकृते भगवतो निर्विकारत्वव्याघात इति वाच्यम्। तत्र विशेषणीभूते अचिति परिणामत्वोपपत्तेः भगवति च परिणामत्वोपचारेणादोषात् अर्थात् भगवतो विशेषणं चिदचिदिति बहुधा समवोचम्। चिदचिच्चेति विशेषणद्वयं भगवतः श्रीन बहुशः प्राह। तत्र चित् जीवः अचित् च प्रकृतिः द्वावपि शरीर शरीरिभावेन भगवतो विशेषणे इति प्राक् अनेकयुक्तिभिरहं प्रत्यपादयम्।

साम्प्रतं च तस्मिन्नेव विशेषणीभूते अचित्तत्वे परिणामो घटते तस्य च भगवत्युपचारः।

वस्तुतस्तु–श्रीरामस्तवराज समीक्षया श्रीरामचन्द्रः स्वयंजगद्रूपः –

**तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत्।**

अतः स्वरूपे मयट् प्रत्ययः। जगदेव जगन्मयः। अथवा प्राचुर्ये मयट्, 'तत्प्रकृतिवचने मयट्' इति पाणिनीयानुशासनात्। जगत् जगति भगवतः प्राचुर्यम् अन्नमया अपूपाः इतिवत्। जगति प्रचुरोऽयं अतो जगन्मयः। अतएव मानसकाराः प्राहुः–

**अग जगमय सब रहित बिरागी।**
**प्रेम सों प्रभु प्रगटहिं जिमि आगी।।**

अथवा–नासौ तद्धितप्रत्ययः। तत्र मयधातो रेव **'पचाद्यच्'** विधानात् साधनीयम्। एवं जगत् मयति गच्छति इति जगन्मयम्। जगन्मयस्तं जगन्मयम्। अथवा आगतार्थे मयट् प्रत्ययः। अर्थात् जगत् आगतं यस्मात् सः जगन्मयस्तं जगन्मयम्। एवम्भूतं परमात्मानं नमस्कृत्य अहं श्रीरामस्तवराजं प्रवक्ष्यामि इत्युपक्रमः।।श्रीः।।

**राघवकृपाभाष्य**–अब श्रीरामस्तवराज के प्रतिपादन में छः विशेषणों का प्रयोग करते हैं। जिस प्रकार भगवान में ऐश्वर्यादि छः गुण हैं उसी प्रकार श्रीरामस्तवराज में भी ये छः विशेषण हैं। भगवान ईश्वर हैं उसी प्रकार 'रामस्तवराज' में भी ऐश्वर्य है। इसी ऐश्वर्यबल से 'श्रीरामस्तवराज' तापत्रयरूप अग्नि को समाप्त कर देता है। अर्थात् 'श्रीरामस्तवराज' के पाठ से दैविक, दैहिक, भौतिक ये तीनों ताप जो मानव को अग्नि के समान जला रहे हैं, वे समाप्त हो जाते हैं। भगवान् धर्ममय हैं और धर्म का फल है पाप का विनाश, इसलिए ठीक यही गुण श्रीरामस्तवराज में भी प्रतिपादित है–'सर्वाघौघनिकृन्तनम्' अर्थात् यह सम्पूर्ण अघ अर्थात् पापों के ओघ यानी समूह का निकृन्तनम् माने नाशक है। इसीलिए श्रीरामस्तवराज के विश्राम में भी श्रीवेदव्यास ने इसे सम्पूर्ण पापों का नाशक कहा है। यथा–

**यः पठेच्छ्रणुयाद्वापि त्रिसन्ध्यं श्रद्धयान्वितः।**
**ब्रह्महत्यादि पापानि तत्समानि बहूनि च।।**

**स्वर्णस्तेयं सुरापानं गुरुतल्पगतिस्तथा।**
**गोवधाद्युप पापानि अनृतात्सम्भवानि च।।**
**सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः।**
**मानसं वाचिकं पापं कर्मणा समुपार्जितम्।।**
**श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम्।**
**इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते।।**

वेदव्यास कहते हैं– जो व्यक्ति आस्तिक बुद्धि से सम्पन्न होकर श्रद्धाभक्ति से युक्त होकर प्रतिदिन श्रीरामस्तवराज का तीन बार पाठ कर लेगा अथवा श्रवण कर लेगा, वह ब्रह्महत्यादि जो भयङ्कर पाप हैं और उनके समान और भी जो अशास्त्रीय कर्मजनित अघ हैं जैसे–स्वर्ण का चुराना, शराब पीना, गुरुतल्पगमन और असत्य से उत्पन्न होने वाले अन्य पाप और गोवधादि जो उपपाप हैं जिन्हें जीव ने करोड़ों करोड़ों कल्पों से जोड़ा है, अपने जीवन में और जो कायिक, वाचिक, मानसिक पाप हैं वे सब के सब केवल श्रीराम के स्मरण मात्र से नष्ट हो जाते हैं। यहाँ यह सत्य है, यह सत्य है यहाँ यह सब कुछ सत्य ही कहा जा रहा है। इसलिए भगवान का धर्ममय विग्रह होने से 'श्रीरामस्तवराज' जीव के समस्त पापों को नष्ट कर देता है। क्योंकि भगवान यशोमय हैं और उसी प्रकार श्रीरामस्तवराज भी भगवान का यशोविग्रह है इसीलिए 'दारिद्र्यदुःख शमनम्' यह जीव के दारिद्र्य और दुःख को भी नष्ट कर देता है। भगवान का यश जीव को दारिद्र्य से और सभी दुःखों से मुक्त करके पावन बना डालता है। भगवान में निरन्तर श्री विद्यमान हैं। यदि श्री है तो वे सर्वसम्पत्तिमान हैं और उसी प्रकार श्रीरामस्तवराज भी सम्पूर्ण सम्पत्तियों का हेतु है। श्री ऐश्वर्य इसका नित्य गुण है। अतः 'सर्वसम्पत्करम्'। भगवान ज्ञानमय हैं इसीलिए श्रीरामस्तवराज भी 'विज्ञानफलदम्' दिव्य विज्ञान के फल को देने वाला है। भगवान में नित्य वैराग्य विराजमान है और वैराग्य ही मोक्ष का साधन है इसीलिए श्री रामस्तवराज को भी मौक्षैक फलसाधन कहा गया है। इस प्रकार जैसे भगवान में ऐश्वर्यादि छः गुण निरन्तर विराजमान रहते हैं, उसी प्रकार श्रीमद्रामस्तवराज भी भगवान की भाँति ऐश्वर्यादि छः गुण से सम्पन्न है इसी अभिप्रायः से यहाँ छः विशेषण दिये गये। अथवा छान्दोग्योपनिषद् में

भगवान के नित्य आठ गुण कहे गये हैं और श्रुति ने यह कहा कि ये आठों गुण भगवान में तो नित्य रहते हैं पर जीवात्मा में भी कभी-कभी भगवत्कृपा से आविर्भूत हो जाते हैं। जैसे **एष वै अपहतपाप्मा, विजरो, विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः।**

ये भगवान अपहतपाप्मा हैं अर्थात् उनके सभी पाप समाप्त हैं और वे जीव के पापों को भी समाप्त कर देते हैं। विजरः उनमें वृद्धावस्था नहीं आती। विमृत्युः परमात्मा मरणधर्म से रहित हैं। विशोकः उनमें किसी प्रकार का शोक नहीं होता। अविजिघत्सः, अपिपासः उन्हें भूख-प्यास नहीं लगती। सत्यकामः उनकी कामनाएँ सत्य होती हैं। सत्यसङ्कल्पः उनका सङ्कल्प भी सत्य होता है। ये आठों गुण जीवात्मा में भी आविर्भूत हो सकते हैं। हाँ! परमात्मा और जीवात्मा का अन्तर इतना ही होता है कि ये परमात्मा में सहज रहते हैं और जीवात्मा में आविर्भूत होते हैं और तिरोभूत भी हो जाते हैं। अर्थात् परमात्मा की कृपा से जीवात्मा में आते हैं और उसके दोष से कभी उससे दूर भी हो जाते हैं।

यहाँ वेदव्यास जी का स्पष्ट मानना है कि 'श्रीरामस्तवराज' का यदि ठीक अनुशीलन किया जाये तो जीवात्मा में ये आठों गुण आविर्भूत हो सकते हैं। जिन्हें यह साधक अनेक वर्षों तक श्रम करके वेदान्त आदि के अनुशीलन से प्राप्त कर सकता है। अतः इन आठों गुणों के आविर्भाव की सूचना हेतु वेदव्यास ने 'श्रीरामस्तवराज' के प्रति आठ विशेषणों का प्रयोग किया है। यथा–

**तापत्रयादिशमनम्**–पाप से ही तो ताप होते हैं। वेदव्यास कह रहे हैं कि रामस्तवराज तापत्रय को समाप्त करता है। अर्थात् श्रीरामस्तवराज के पाठ से जीव अपहतपाप्मा हो जाता है। उसके सारे पाप समाप्त हो जाते हैं इसी कारण उसके तीनों ताप भी स्वयं नष्ट हो जाते हैं। **सर्वाघौघ निकृन्तनम्**–पाप का परिणाम ही तो वृद्धावस्था होती है। अर्थात् पापों को भोगने के लिए भी वृद्धावस्था आती है। श्रीरामस्तवराज से जीव विजर अर्थात् जरामरण के दुःख से दूर हो जाता है इसलिए वह सभी पापों से दूर हो जाता है। श्रीरामस्तवराज सभी पापों को नष्ट कर देता है। अतः

सर्वाघौघनिकृन्तनम्'। श्रीरामस्तवराज से जीव दारिद्र्य और दुःख से मुक्त हो जाता है। इसीलिए वह विमृत्यु हो जाता है। अर्थात् मरण से अतीत हो जाता है। क्योंकि दारिद्र्य और दुःख के कारण ही तो वह मरण जैसी यातनाओं को भोगता है। इसलिए तीसरा गुण भी उसमें आ जाता है 'विमृत्युत्व' इसीलिए 'दारिद्र्यदुःखशमनम्।

श्रीरामस्तवराज से जीव विशोक अर्थात् शोक से रहित हो जाता है। क्योंकि उसे सभी सम्पत्तियाँ मिल जाती हैं इसीलिए यहाँ सर्वसम्पत्करम् का प्रयोग किया गया। श्रीरामस्तवराज से जीव में शिवत्व आता है अर्थात् वह शिवस्वरूप होकर अविजिघत्सत्त्व हो जाता है। उसे भूख नहीं लगा करती। श्रीरामस्तवराज से जीव अपिपास हो जाता है। उसे प्यास नहीं लगती। इस अमृत वे वह धन्य-धन्य हो जाता है। इसीलिए यहाँ विज्ञानफलदम्। क्योंकि विज्ञान का यही तो फल है कि परमात्मा को प्राप्त करके व्यक्ति भूखप्यास से रहित हो जाता है। श्रीरामस्तवराज से जीव की सभी कामनाएँ सत्य होती हैं, उसमें सत्यकामत्व गुण आता है इसलिए यहाँ 'दिव्यम्' का प्रयोग किया गया। अर्थात् वह दिव्य बन जाता है। अलौकिक बन जाता है। स्वर्गस्थ देवताओं की भाँति उसकी सभी कामनाएँ सत्य होने लगती हैं। जीव में स्वयं सत्यसङ्कल्पत्व आ जाता है। उसके सारे संकल्प सत्य होने लगते हैं। इसीलिए यहाँ मोक्षैकफलसाधनम् कहा गया। मोक्ष का एकमात्र फल है भगवत्प्राप्ति। वह भी मनुष्य को सम्भव है श्रीरामस्तवराज के पाठ से। यही इन आठ विशेषणों का अभिप्रायः हो सकता है इस प्रकरण में—

**विज्ञानफलदं दिव्यम्, मोक्षैकफलसाधनम्।**
**नमस्कृत्य प्रवक्ष्यामि रामं कृष्णं जगन्मयम्।।**

कहकर वेदव्यास ने संङ्केत दिया है-हे महाराज युधिष्ठिर! यह विज्ञानरूप फल को देनेवाला है। यहाँ विज्ञान शब्द से तीन अर्थ अभिप्रेत हैं—विज्ञान अर्थात् विशिष्टाद्वैतज्ञान। विशिष्टाद्वैतज्ञानं विज्ञानम्। विशिष्टाद्वैत का फल है भगवत्प्राप्ति। भगवान को प्राप्त करना और उस फल को यह प्रदान करता है अर्थात् श्रीरामस्तवराज का पाठ करके मनुष्य भगवान श्रीराम को भी प्राप्त कर सकता है। विशिष्टाद्वैत के अनुसार भागवत के जो लक्षण

कहे गये हैं वे इस प्रकार हैं—

**अर्थपञ्चकतत्त्वज्ञाः आकारत्रयसंयुताः।**
**पंचसंस्कारसम्पन्नास्ते वै भागवताः स्मृताः॥**

अर्थपंचक के तत्त्व को जाननेवाला व्यक्ति भागवत होता है और यही विशेषता अद्वैत का ज्ञान है। विशिष्टाद्वैतवाद में जीव और प्रकृति ब्रह्म के विशेषण हैं। और ब्रह्म उनसे नित्य विशिष्ट है। ब्रह्म कार्य और कारणभेद से दो प्रकार का है और यह दोनों दशा में चित् और अचित् अर्थात् जीव और प्रकृति इन दोनों से विशिष्ट रहता है। इसलिए इन विशिष्ट कार्यकारण ब्रह्मों का अद्वैत ही विशिष्टाद्वैत है। और यहाँ जीव का परमात्मा से स्वरूपतः अभेद कदापि नहीं स्वीकारा गया है। जीव परमात्मा का दास है, यही उसका स्वरूप है। वह परमात्मा से सम्बन्धदृष्टि से अभिन्न हो सकता है पर स्वरूप से कभी भी अभिन्न नहीं होता। क्योंकि दोनों ही नित्य हैं। नित्य का नित्य में विलय नहीं होता। नित्य नित्य के समीप जा सकता है।

**परं पदं पुरुषमुपैति दिव्यम्।**

जीव पुरुष के समीप जा सकता है। सामीप्यमुक्ति का यही अभिप्राय है। वह भगवान के समीप रह सकता है भोगमात्र में उसको भगवान् की समता मिल सकती है परन्तु जीव कभी सीतापति नहीं बन सकता। जीव में श्रीवत्सलाञ्छन नहीं आ सकते। आठों गुणों के होने के पश्चात् भी जीवात्मा जगत् की सृष्टि नहीं कर सकता। इसीलिए ब्रह्मसूत्रकार ने कह दिया—

**जगद् व्यापारवर्ज्यं प्रकरणादसन्निहितत्वाच्च।**

इस प्रकार का प्रकरण होने से और असन्निहित होने के कारण जीव जगत् का व्यापार नहीं कर सकता। इसलिए-'जीवो ब्रह्मैव नापरः' यह केवल अपलाप के अतिरिक्त और कुछ नहीं है। जीव केवल भोगमात्र में ब्रह्म की समानता कर सकता है। 'मम साधर्म्यमागताः।' भगवान् ने यह कभी नहीं कहा कि 'मम स्वारूप्यमागताः। जीव भगवत्स्वरूप नहीं हो सकता। अतएव स्वस्वरूप, परस्वरूप, उपायस्वरूप, फलस्वरूप और विरोधिस्वरूप इन पाँचों अर्थों का ज्ञान ही विज्ञान है। स्व अर्थात् जीव। उसका स्वरूप है भगवान् का कैङ्कर्य। भगवान का दास होकर उनके चरणों में रहना उनकी नवधा भक्ति

के द्वारा सेवा करते रहना।

श्रीरामस्तवराज में नारद, सनकादि, वेदव्यास जैसे महापुरुषों द्वारा की हुई स्तुति का वर्णन करके स्वरूप की बहुत स्पष्ट व्याख्या की गई है अर्थात् परमहंस परिव्राजकाचार्य होकर भी नारदादि महर्षि भगवान् के दास ही बनना चाहते हैं। वे स्वामी कभी नहीं बनना चाहते। भगवान् भी कभी नहीं बनना चाहते। परस्वरूप की चर्चा नारद की स्तुति में की गई है, जिसे आगे चलकर 'श्रीरामस्तवराज' के २८वें श्लोक से ७७वें श्लोक तक स्पष्ट किया जायेगा। उपायस्वरूप–भगवान् प्राप्त कैसे होंगे? उसका एकमात्र उपाय है भक्ति, जिसकी चर्चा करते हुए श्रीनारद ने भगवान् से यही कहा–मैं और कोई वरदान नहीं चाहता। केवल आपके श्रीचरणों की भक्ति चाहता हूँ, जिसे श्रीरामस्तवराज के ५०वें श्लोक में स्पष्ट किया गया है और यही श्रीनारद का मन्तव्य है। फलस्वरूप–भगवत्प्राप्ति के समान कोई फल हो नहीं सकता। और इसका नारद जी ने श्रीरामस्तवराज में बहुत विस्तार से विवेचन किया है। वे कहते हैं–आपकी मूर्ति के दर्शन से मैं कृतार्थ हो गया। आज मेरा जन्म सफल हुआ। आज मेरा जीवन सफल हुआ। आज मेरा ज्ञान सफल हुआ। आज मेरे सभी कर्म सफल हुए। आज मेरा आपका नामस्मरण भी सफल हुआ। सब कुछ सफल हो गया भगवान को देखने से।

**अद्य मे सफलं जन्म जीवितं सफलं च मे।**
**अद्य मे सफलं ज्ञानमद्य मे सफलं तपः।**
**अद्य मे सफलं कर्म त्वत्पादाम्भोजदर्शनात्।।**
**अद्य मे सफलं सर्वं त्वन्नामस्मरणादिकम्।**
**त्वत्पादाम्भोरुहद्वन्द्व सद्भक्तिं देहि राघव।।**

विरोधिस्वरूप–भगवत्प्राप्ति में विरोधी है माया। उसके लिए नारद जी स्पष्ट कहते हैं कि–

**मायामय निरस्ताय प्रपन्नजनसेविने।**

माया की उपस्थिति में भगवान् का आनन्द लेना सम्भव नहीं होता। इस प्रकार विज्ञान अर्थात् विशिष्टाद्वैतसिद्धान्त के अनुसार अर्थपंचक के ज्ञान के फलभूत परमात्मा को प्रदान करता है श्रीरामस्तवराज। अथवा बुद्धि का फल है अनाग्रह। आग्रहशून्य होकर, विनम्र होकर भक्ति करना और इस

विधा का श्रीरामस्तवराज में बहुत मधुर वर्णन किया गया है। नारद जैसा परमहंस परिव्राजकाचार्य भी भगवान् की स्तुति करने के लिए विनम्र होकर कृताञ्जलि होकर स्तुति कर रहा हो, यह सबसे बड़ा फल है बुद्धि का। विज्ञान का तृतीय अर्थ है जीवात्मा। और जीवात्मा का मुख्य फल है परमात्मा का दर्शन। स्वयं वाल्मीकि जी ने श्रीमद्रामायणम् के अयोध्याकाण्ड के सत्रहवें सर्ग के चौदहवें श्लोक में कहा–

**यश्च रामं न पश्येत्तु यं च रामो न पश्यति।**
**निन्दितः सर्वलोकेषु स्वात्माप्येनं विगर्हते।।**

जिसने श्रीराम जी को नहीं देखा या जिसे श्रीरामजी ने नहीं देखा, वह सभी लोकों में निन्दित है और उसकी आत्मा भी उसे फटकारती है। इसका तात्पर्य यह हुआ कि भगवान् का दर्शन ही जीवन का सबसे बड़ा फल है, जीवात्मा का सबसे बड़ा फल है। श्रीमद्भागवतम् के दशमस्कन्ध के इक्कीसवें अध्याय के सातवें श्लोक में गोपियाँ भी कहती हैं कि–

**अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननु विवेशयतोर्वयस्यैः।**
**वक्त्रं व्रजेश सुतयोरनुवेणु जुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम्।।**

हे सखियो! अपने मित्रों और श्रीमद्व्रजांगनाओं के साथ सामान्य पशुप्राय जीवात्माओं को रासमण्डल में प्रवेश कराते हुए श्रीमद्वृषभानुसुता राधारानी और श्रीनन्दनन्दन के मुरलीमाधुरी से युक्त अनुरक्तों पर तिरछी चितवन करते हुए मुखारविन्द का जिन्होंने पान कर लिया है, उन्हीं को नेत्रों का फल मिला है और उन्हीं के नेत्रवान् होने का फल है। इससे बड़ा फल हम कोई दूसरा नहीं जानते। इसका तात्पर्य यह है कि जीवात्मा का फल है परमात्मा की प्राप्ति, और वेदव्यास कहते हैं कि वह परमात्मा की प्राप्ति श्रीरामस्तवराज के नित्य पाठ से सम्भव है। इसमें किसी प्रकार का सन्देह नहीं करना चाहिए।

**मोक्षैकफलसाधनम्**–मोक्ष का एकमात्र फल है भगवान् की भक्ति। क्योंकि धर्म का फल है मोक्ष।

**धर्म तें बिरति जोग तें ज्ञाना। ज्ञान मोच्छप्रद वेद बखाना।।**
**तातें बेगि द्रवउँ मैं भाई। सो मम भगति भगत सुखदाई।।**

धर्मानुष्ठानों का फल है वैराग्य। वैराग्य का फल है योग। योग का फल है ज्ञान, ज्ञान का फल है मोक्ष और मोक्ष का भी फल है भगवद्भजन का आनन्द लेना। उस फल का एकमात्र साधक है श्रीरामस्तवराज। ऐसे श्रीरामस्तवराज की व्याख्या करने के लिए मैं कृष्ण से अभिन्न श्रीराम को, जो जगन्मय हैं, प्रणाम करके प्रवचन का विषय बनाऊँगा, ऐसा वेदव्यासजी का प्रतिज्ञान है। यहाँ 'रामं कृष्णं' शब्द बहुत महत्त्वपूर्ण है। वेदव्यास जी की दृष्टि में श्रीराम और श्रीकृष्ण में कोई भेद नहीं है और उनका अभिप्रायः यह भी है कि महाराज युधिष्ठिर! तुम ऐसा मत सोचना कि मैं तो कृष्णोपासक हूँ फिर रामस्तवराज का पाठ मैं कैसे करूँ? जो तुम्हारे नेत्रों के सामने श्रीकृष्ण हैं वही त्रेता के राम हैं, इनमें और श्रीराम में कोई अन्तर नहीं है। श्रीराम ही श्रीकृष्ण का मौलिक स्वरूप है। यहाँ ये केवल लीला कर रहे हैं। इनका आदर्श तो श्रीराम ही हैं। इसीलिए शास्त्रों में श्रीराम को श्रीकृष्ण से भिन्न नहीं माना गया। वाल्मीकिरामायण में भी ब्रह्मा जी कहते हैं–जो आप त्रेता में श्रीरामरूप में उपस्थित हैं, वे ही द्वापर में श्रीकृष्ण भी बनेंगे—

**कृष्णश्चापि वृहद्बलः।**

श्रीराम और श्रीकृष्ण दोनों में कोई भेद नहीं है। यहाँ साक्षाद् भगवान् हैं और सभी भगवान् के अंशावतार हैं। इसका उत्तर यह है कि वहाँ 'तु' कहकर भगवान् श्रीराम का भी सङ्केत है अर्थात् कृष्ण और राम ये दोनों भगवान् हैं। अथवा प्रसिद्ध वस्तु को ही विधेय बनाकर उसमें किसी का विधान किया जाता है। यहाँ प्रसिद्ध क्या है? प्रसिद्ध विधेय है। और विधेयत्वेन भगवत्व का विधान श्रीकृष्ण में किया जा रहा है। जैसे त्वं राजाभव अर्थात् तुम राजा बनो। राजा शब्द पहले से प्रसिद्ध है। इसी प्रकार भगवान् शब्द भी पहले से प्रसिद्ध है। जिसे वाल्मीकि जी ने श्रीराम के लिए प्रयोग किया है।

**धर्मात्मनो भगवतो लोके रामस्य धीमतः।**

ब्रह्मा जी नारद जी से कहते हैं कि–धर्मात्मा, प्रशस्तबुद्धिसम्पन्न, परमवीरशिरोमणि, ऐसे भगवान् श्रीराम के यश का तुम वर्णन करो। भगवान

के रूप में श्रीराम प्रसिद्ध हो चुके हैं और उनका यहाँ श्रीकृष्ण में विधान किया जा रहा है। इसलिए 'कृष्णस्तु भगवान् स्वयम्' का अर्थ है कि कृष्ण तो साक्षात् भगवान राम ही हैं। नवयोगेश्वरों के सम्वाद में जहाँ युगानुरूप उपासना का प्रतिपादन किया गया वहाँ स्पष्ट कहा गया है कि जो निरन्तर ध्येय हैं, जो अपमान को नष्ट करते हैं, जो अभीष्ट के दाता हैं, जो समस्त तीर्थों के आस्पदभूत हैं, जिन्हें शङ्कर एवं ब्रह्मा प्रणाम करते हैं जो सबको शरण देने में समर्थ हैं जो भृत्यों की आर्ति को दूर करते हैं, जो परमकृपालु और जो भवसागर के लिए जहाज के समान हैं ऐसे हे महापुरुष! आपके चरणारविन्दों को हम प्रणाम करते हैं। हे परमात्मन् हे धार्मिक शिरामणे! पिता का वचन मानकर आपश्री के जो चरण देवदुर्लभ राज्यलक्ष्मी को छोड़कर बन में चले गये और वही श्रीचरण पत्नी सीतादेवी के लिए ईप्सित मायामृग के पीछे दौड़े, ऐसे उन चरणारविन्दों को मैं वन्दन करता हूँ भागवत ११/५-३२-३३ जहाँ एक ही साथ राग और त्याग दोनों ही चरमोत्कर्ष को प्राप्त कर चुके हैं। इस प्रकार महापुरुष शब्द और प्रणतपाल शब्द का प्रयोग करके, जो राम जी के लिए प्रसिद्ध हैं, वेदव्यास ने सिद्ध किया कि श्रीराम और श्रीकृष्ण में कोई भेद नहीं है। क्योंकि श्रुति ने दोनों शब्दों को परब्रह्म का वाचक बताया है। रामतापनीयोपनिषद् में श्रुति ने यह कहा कि–

**रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।**
**इति रामपदेनासौ परब्रह्माभिधीयते॥**

जिस सत्यानन्दस्वरूप चिदात्मा में योगीजन नित्य रमण करते हैं वे ही परब्रह्म परमात्मा यहाँ राम पद से अभिहित हो रहे हैं। और गोपालतापनीयोपनिषद् में भी श्रुति ने कहा–

**कृषिर्भूवाचकः शब्दोणस्तु निर्वृतिवाचकः।**
**तयोरैक्यं परब्रह्म श्रीकृष्णेत्यभिधीयते॥**

कृषि का अर्थ है भू और ण का अर्थ है निवृत्ति अर्थात् सत्ता और शान्ति का समन्वय ही कृष्ण है और वही है परब्रह्म। इस प्रकार परब्रह्मवाचक दोनों शब्दों का यहाँ प्रयोग करके श्रुति ने यही कहा कि श्रीराम और श्रीकृष्ण

में कोई भेद नहीं है। यहाँ तक कि भागवत में श्रीकृष्ण के लिए अंश शब्द का बारम्बार प्रयोग आया है। बार बार यह कहा गया है कि भगवान् श्रीकृष्ण ने अंश से अवतार लिया। परन्तु श्रीमद्वाल्मीकिरामायण में ऐसा कभी भी प्रयोग नहीं मिलता। वहाँ तो भगवान् का स्पष्ट आविर्भूत होना ही लिखा है। यदि कहा जाये कि श्रीमद्भागवतम् में 'अंशांशेन' शब्द का प्रयोग हुआ है, ऐसा भी नहीं कहना चाहिए। वहाँ का यदि आप प्रसंग देखिये तो स्पष्ट हो जायेगा—

**तस्यापि भगवानेषः साक्षाद् ब्रह्ममयो हरिः।**
**अंशाशेन चतुर्धागात् पुत्रत्वं प्रार्थितः सुरैः॥**

वेदव्यास जी यहाँ कहते हैं कि दररथ जी के यहाँ परिपूर्णतम परात्पर परब्रह्म परमात्मा अपने अंशभूत विष्णु के भी अंश साक्षात् अंशांश ब्रह्माजी द्वारा देवताओं के साथ चतुर्धा अर्थात् चारों मुखों से प्रार्थना किए जाने पर साक्षात् वेदमय श्रीहरि भगवान् श्रीराम राम लक्ष्मण भरत शत्रुघ्न संज्ञा से व्यवहृत होकर प्रकट हुए। यहाँ साक्षात् शब्द का प्रयोग हुआ है। इससे स्वयं अंशावतार का विरोध हो जाता है। साक्षाद् ब्रह्म में परमात्मा ही दशरथ जी के यहाँ श्रीराम रूप में प्रकट हुए। यहाँ 'अंशांशेन' शब्द का प्रयोग भी बहुत मधुर है—अंशांशेन् चतुर्धागात् पुत्रत्वं प्रार्थितः सुरैः 'अंशांशेन' पर टीकाकारों ने बहुत सी व्याख्याएँ की हैं। अर्थात्–अंशांशेन–भगवान् श्रीराम के अंश हैं विष्णु और उनके अंश से प्रकट हुए हैं भरत, लक्ष्मण, शत्रुघ्न। उनके साथ भगवान् आए। अथवा– यह 'अंशाशेन' शब्द प्रार्थित के साथ अन्वित होगा। तात्पर्य यह है कि भगवान् श्रीराम दशरथ जी के यहाँ कब प्रकट हुए? जब अंशांश के द्वारा प्रार्थना की गई। अर्थात् सुरैः सह अंशांशेन चतुर्धा प्रार्थितः–जब देवताओं के सहित भगवान् के अंश विष्णु और उनके अंशभूत ब्रह्माजी ने चतुर्धा अर्थात् चारों मुखों से भगवान् से प्रार्थना की तब भगवान् श्रीराम प्रकट हुए। इसका अर्थ यही है कि यहाँ एक साथ साक्षात् और अंशोशेन शब्द का प्रयोग कर देने से यह सिद्ध हुआ कि अंशांशेन शब्द श्रीराम के अवतार में अन्वित नहीं अपितु प्रार्थना के कर्ता में अन्वित है और यहाँ अंशांश शब्द का अर्थ है ब्रह्मा। भगवान् श्रीराम के अंश हैं विष्णु और उनके भी अंश हैं ब्रह्मा, अंशस्य अंशः अंशांशः ते न अंशाशेन।

स्वयं अग्नि ने सत्यकाम को समझाते हुए कहा–पृथ्वी, अन्तरिक्ष, द्यौ, समुद्र ये चार कलाएँ हैं। इन कलाओं से युक्त पाद को अनन्तवान् कहते हैं। तीसरे दिन हंस ने सत्यकाम को उपदेश करते हुए कहा–अग्नि, सूर्य, चन्द्र और विद्युत् ये भी ब्रह्म की कलाएँ हैं। इन कलाओं से युक्त तीसरे पाद को ज्योतिष्मान् कहते हैं। और अन्त में मद्गु ने सत्यकाम को उपदेश करते हुए कहा–प्राण, चक्षु, श्रोत्र, और मन ये चारों ब्रह्म की कलाएँ हैं, इस पाद को आयतनवान् कहते हैं। इस प्रकार भगवान् स्वयं चतुष्पाद विभूति हैं और ये १६ कलाएँ स्वयं भगवान् राम के चरित्र में स्पष्ट गोचर होती हैं। चारों दिशाएँ उनके वश में हैं इसलिए उनको दिक्पाल भी प्रणाम करते हैं। पूर्व, पश्चिम, उत्तर, दक्षिण, चारों से उनका सम्बन्ध है–उत्तर में जन्म, पूर्व में विवाह और पश्चिम की सभ्यता से स्वयं मन्थरा और कैकेयी को निमित्त बनाकर बनवास और दक्षिण में रावण का वध इस प्रकार चारों दिशाएँ परमात्मा की हैं और सम्पूर्ण पृथ्वी, अन्तरिक्ष, स्वर्ग और समुद्र ये सब श्रीराम द्वारा शासित हैं। इसलिए गोस्वामी जी ने कहा–

**भूमि सप्तसागर मेखला। एक भूप रघुपति कोसला।।**

समुद्र भी भगवान् श्रीराम के नियन्त्रण में है। इसलिए–

**सन्धानेउ प्रभु बिसिख कराला। उठी उदधि उर अन्तर ज्वाला।**
**मकर उरग झषगन अकुलानी। जरत जन्तु जलनिधि जब जानी।**
**कनक थार भरि मनिगन नाना। बिप्र रूप आयउ तजि माना।**

साक्षात् समुद्र को भगवान् श्रीराम ने अपने बाण से नियमित किया और समुद्र ब्राह्मणरूप धारण करके प्रभु की शरण में आया। क्योंकि वह उसकी कला है। और अग्नि, चन्द्र, सूर्य, विद्युत् भी उनकी कलाएँ हैं। स्वयं अग्नि पर उन्होंने नियन्त्रण किया है। अग्नि उनका मुख है, सूर्य उनके नेत्र हैं, चन्द्र उनका मन है और विद्युत् जैसा उनका पीताम्बर है–

**आनन अनल अम्बुपति जीहा। नयन दिवाकर कच घनमाला।**
**मन ससि चित्त महान्। तडित विनन्दक पीत पट उदर रेख बलतीन।**

प्राण, चक्षु, श्रोत्र और मन को भी उन्होंने स्वीकारा है–

**प्राण समान राम प्रिय अहहू। और नेत्र–राजीव नयन धरे धनुसायक।**
**श्रवण–श्रवण सुभग भूषण छवि छाये। मन–मोहि अतिसय प्रतीति मन केरी।**

इस प्रकार से श्रुति, स्मृति, पुराण, मानस एवं समस्त संहिता ग्रन्थों को सूक्ष्मरूप से अवलोकन करने पर यह निष्कर्ष निकलता है कि श्रीराम षोडशकलासम्पन्न हैं अतः वे अवतारन पति हैं॥श्री॥

**तुलसीकुन्दमन्दार पुष्पमाल्यैरलङ्कृतम्।**
**कर्पूरागुरुकस्तूरी दिव्यगन्धानुलेपनम्॥१७॥**

**रा०कृ०भा०**–अधुना भगवतः श्रीरामस्य पौगण्डध्यानं वर्णयति। तुलसीभगवत्प्रिया तुलां स्यति नाशयतीति तुलसी **पृषोदरादित्वात् आकारस्य ह्रस्वाकारः**। कुन्दं पुष्पविशेषः मन्दारमपि पुष्पविशेषः तुलसीकुन्दुमन्दारैः तुलसीकुन्दमन्दारचितैर्वा पुष्पमाल्यैरलंकृतम् सुशोभितम्। कर्पूरं च अगुरं च कस्तूरी च कर्पूरागुरुकस्तूर्यः आभिर्युक्तो यः दिव्यगन्धः तस्य अनुकूलं लेपनं यस्य सः तं श्रीरामं स्मरेत्॥श्रीः॥

**राघवकृपाभाष्य**–तुलसी, कुन्द एवं मन्दार से निर्मित दिव्य पुष्पमालाओं से अलंकृत तथा कपूर, अगर एवं कस्तूरी जैसे गन्धों से मिश्रित अलौकिक गन्ध का अनुलेपन किये हुए ऐसे भगवान् श्रीराम का साधक स्मरण करे॥श्री॥

**योगशास्त्रेष्वभिरतं योगेशं योगदायकम्।**
**सदा भरतसौमित्रि शत्रुघ्नैरुपशोभितम्॥१८॥**

**रा०कृ०भा०**–योगशास्त्रेषु अभिरतं योगेशं योगदायकं भरत सौमित्रशत्रुघ्नैः सदा उपशोभितं रामं स्मरेत्। योगं ब्रह्मजीवयोः शाश्वतं सम्बन्धं शासति इति योगशास्त्राणि तेष्वभिरतं योगेशं योगानां योगवतां ईशं स्वामिनम्। योगदायकम् योगं ददातीति योगदायकस्तं योगदायकम् शाश्वतसम्बन्धप्रदातारं भः भगवद्भावविशेषः तस्मिन् आदरेण रतः भरतः भरं तनोति इति भरतः भश्च रश्च तश्च तानि सन्त्यस्मिन्निति भरतः, सौमित्रिः सुमित्रायाः अपत्यं पुमान् सौमित्रिः लक्ष्मणः, शत्रून हन्तीति शत्रुघ्नः। भरतश्च सौमित्रिश्च शत्रुघ्नश्च तैः भरतसौमित्रिशत्रुघ्नैः उपशोभितं निकटवर्तमानतया सुशोभितम् एवम्भूतं श्रीरामं स्मरेत्॥श्रीः॥

**राघवकृपाभाष्य**–योगशास्त्रों में लगे हुए योगियों के ईश्वर, योग के

प्रदाता, भरत, लक्ष्मण एवं शत्रुघ्न से निरन्तर निकट से सुशोभित ऐसे भगवान् श्रीराम का स्मरण करना चाहिए।

यहाँ योग का अर्थ है–जीव और ब्रह्म का शाश्वत सम्बन्ध। उनकी व्याख्या करनेवाले शास्त्रों को योगशास्त्र कहते हैं। ऐसे योगशास्त्रों में भगवान् निरन्तर अभिरत रहते हैं अर्थात् भक्तिशास्त्र के श्रवण में उन्हें आनन्द की अनुभूति होती है। वे योगों के ईश्वर हैं और योगयुक्त योगियों के भी ईश्वर हैं। वे जीव को योग अर्थात् अपना शाश्वत सम्बन्ध प्रदान करते हैं और वे भरतजी, श्रीलक्ष्मण जी तथा शत्रुघ्न जी से निरन्तर सुशोभित हैं। ऐसे पौगण्डावस्था में वर्तमान भगवान् श्रीराम का निरन्तर स्मरण करना चाहिए। जैसा कि गोस्वामी जी कवितावली रामायण में स्वयं कहते हैं–

**पदपंकज मंजु बनीं पनहीं धनुहीं कर पंकज पानि लिये।**
**लरिका संग खेलत डोलत हैं सरजू तट चौहट हाट दिये।**
**तुलसी अस बालक सों नहिं नेह कहा जग जोग बिराग किये।**
**नर ते खर सूकर स्वान समान कहौ जग में फल कौन जिए।।**

तो ऐसे भगवान् श्रीराम का निरन्तर स्मरण करना चाहिए।।श्री।।



**विद्याधर सुराधीश सिद्धगन्धर्व किन्नरैः।**
**योगीन्द्रैनारदाद्यैश्च स्तूयमानमहर्निशम्।।१९।।**

**रा०कृ०भा०**–विद्याधराः उपदेवाः सुराणामधीशाः सुराधीशाः श्रेष्ठदेवाः विद्याधराश्च सुराधीशाश्च सिद्धाश्च गन्धर्वाश्च किन्नराश्च विद्याधरसुराधीश सिद्धगन्धर्वकिन्नराः तैः। योगीन्द्रैः योगिनामिद्रा योगीन्द्राः तैः। नारदाद्यैः नारदः आद्यः येषां ते नारदाद्यास्तैः एवम्भूतैर्देवर्षिभि अहर्निशं सततं स्तूयमानं स्तुतिविषयं क्रियमाणं श्रीरामं सदा स्मरेत्।।श्रीः।।

**राघवकृपाभाष्य**–साधक को चाहिए कि वह उन श्रीराम का निरन्तर ध्यान करे जो विद्याधर, श्रेष्ठ देवता, सिद्ध, गन्धर्व, किन्नर, श्रेष्ठ शुकाचार्य आदि योगीजन एवं नारदादि देवर्षियों के द्वारा दिनरात स्तुति के विषय बनाए जा रहे हैं। अर्थात् विद्याधरादि उपदेवता, इन्द्रादि श्रेष्ठ देवता, कपिलादि सिद्ध गण, तुम्बुरु प्रभृति गन्धर्वगण हनुमान् जी द्वारा संचालित किन्नरगण, शुक आदि योगिराजगण नारदादि देवऋषिगण जिनकी अहर्निश स्तुति कर रहे हैं ऐसे श्रीराम का साधक को स्मरण करना चाहिए।।श्री।।



**विश्वामित्रवसिष्ठादि मुनिभिः परिसेवितम्।**
**सनकादिमुनिश्रेष्ठै र्योगिवृन्दैश्च सेवितम्॥२०॥**

**रा०कृ०भा०**–विश्वस्य मित्रं विश्वामित्रम् विश्वं मित्रं यस्य वा स विश्वामित्रः 'मित्रे चर्षौ' इत्यनेन ऋष्यर्थे गम्यमाने मित्रशब्दे उत्तरपदे परे विश्वशब्दस्य अकारस्य दीर्घः। विश्वामित्रश्च वसिष्ठश्च विश्वामित्रवसिष्ठौ तौ आदी येषां ते विश्वामित्रवसिष्ठादयः विश्वामित्रवसिष्ठादयश्च ते मुनयश्च इति विश्वामित्रवसिष्ठादिमुनयः तैर्विश्वामित्रवसिष्ठादिमुनिभिः परिसेवितम्। सनकः आदिर्येषां ते सनकादयः। सनक सनन्दन सनातन सनत्कुमाराः, मुनीनां श्रेष्ठाः मुनिश्रेष्ठाः सनकादयश्च ते मुनिश्रेष्ठाश्च इति सनकादिमुनिश्रेष्ठाः तैः सनकादिमुनिश्रेष्ठैः। योगिनां वृन्दानि योगिवृन्दानि तैः योगिवृन्दैः शुकाचार्य–नवयोगेश्वरप्रभृतिभिः। चकारेण अन्यैश्च श्रीप्रह्लादप्रभृतिभिर्वैष्णवैः सेवितं श्रीरामं स्मरेत्।

इदं कृतदारस्य भगवतो ध्यानमनुमीयते। शिवधनुर्भंगानन्तरं परशुराममानभंगानन्तरं च वैष्णवकोदण्डपरामर्शेण लोकत्रये विख्यापित भगवन्माहात्म्यस्य श्रीरामस्य विश्वामित्रवसिष्ठाद्यैः सनकादिमुनिः श्रेष्ठैर्योगिवृन्दैश्च प्रकटितैश्वर्यस्य सेवितत्वात्॥श्रीः॥

**राघवकृपाभाष्य**–विश्वामित्र और वसिष्ठ आदि श्रेष्ठ मुनियों द्वारा परिसेवित एवं सनकादि मुनिश्रेष्ठ तथा योगिवृन्दों द्वारा सेवित श्रीराम का श्रीवैष्णवभक्त सदैव स्मरण करें। संसार ही जिसका मित्र है, उसे विश्वामित्र कहते हैं। यहाँ 'मित्रे चर्षौ' इस पाणिनिसूत्र से ऋषि अर्थ हरने पर मित्र शब्द के उत्तरपद परे होने पर विश्व शब्द के अकार के स्थान पर आकार दीर्घ हो गया है। विश्वामित्र और वसिष्ठ ये दोनों ही श्रीराम के शिक्षा–दीक्षा गुरु हैं। विश्वामित्र भगवान् राम के शिक्षा गुरु हैं और वसिष्ठ जी उनके कुलगुरु हैं। ये दोनों ही भगवान् श्रीराम के वात्सल्योपासक भक्त हैं। इनके द्वारा भगवान्श्रीराम की वात्सल्यभाव से सेवा की जाती है। प्रत्येक भक्त भगवान् की सेवा ही करता है। वह चाहे किसी भाव से कर रहा हो। भगवान् का पिता बनना, गुरु बनना, यह भी उनकी एक सेवा है। क्योंकि वहाँ साधक भगवान् की वात्सल्यभाव से सेवा करता है। शिष्यभाव से उनकी सेवा करता है और इस रस को शुद्धरस माना गया है। विशेष रस माना गया है। और

सनक, सनन्दन, सनातन, सनत्कुमार ये चारों सनकादि एवं योगियों के वृन्द अर्थात् शुकादि एवं शिवादि श्रेष्ठ योगियों के द्वारा जिनकी निरन्तर सेवा की जाती है ऐसे श्रीराम का स्मरण करना चाहिए।।श्री।।

**रामं रघुवरं वीरं धनुर्वेद विशारदम्।**
**मंगलायतनं देवं रामं राजीवलोचनम्।।२१।।**

**रा०कृ०भा०**—रमयति सर्वभूतानि यःसः रामः तं सर्वभूतानन्दहेतुम्। रघुषु वरः रघुवरः रघूणां रघुवंश्यानां वरः रघुवरः, रघुभिर्जीवैः इष्टदेवत्वेन व्रियते इति रघुवरः, रघुभ्य जीवेभ्यः वं भजनरसं राति, ददातीति रघुवरः तं एवम्भूतम्। वीरं प्रख्यातबलपौरुषम् अद्वितीयधनुर्धरं विं विष्णुमपि परशुरामभूतं ईरयति कम्पयति इति वीरः तम् वैष्णवावतारस्य परशुरामस्यापि कम्पहेतुत्वात्। तथा च महर्षिर्वाल्मीकिः—

**तेजोभि र्हतवीर्यत्वात् जामदग्न्यो जडीकृतः।**
**रामं कमलपत्राक्षं मन्दं मन्दमुदैक्षत।।**

धनुर्वेदे यजुर्वेदस्योपवेदे निजप्रियत्वात् विशारदम्। तथा हि—मंगलानां आयतनं मंगलायतनं सकलमंगलानां गृहं देवं समस्तजीवानां परदेवतम् राजीवलोचनं अरुणकमलनयनं रामं राजसाः मरणं यान्ति येन यो महीं स्थितः एवम्भूतं श्रीरामं कृतसीतापरिग्रहम् कमनीयकिशोरमूर्तिं ध्यायेत् स्मरेत्।।श्रीः।।

**राघवकृपाभाष्य**—जो रा अर्थात् राजनशील म अर्थात् जो पृथ्वी पर विराजमान होकर सुशोभित होते हैं, जिनके द्वारा राक्षस मरण को प्राप्त करते हैं ऐसे रघुकुल में श्रेष्ठ धनुर्वेद में विशारद समस्त मंगलों के एकमात्र आयतन धामस्वरूप दिव्यकान्ति से सम्पन्न राजीवलोचन भगवान् श्रीराम का निरन्तर स्मरण करना चाहिए। वे राम हैं अर्थात् उनके द्वारा राक्षस मरण को प्राप्त हो जाते हैं।

**जो आनन्दसिन्धु सुखरासी। सीकर तें त्रैलोक सुपासी।**
**सो सुखधाम राम अस नामा। अखिललोकदायक विश्रामा।**

वे पृथ्वी पर स्थित होकर सुशोभित हो रहे हैं। वे रघुवर हैं। रघूणां वरः रघुवरः अर्थात् रघुकुल में श्रेष्ठ हैं। अथवा रघुभिः विव्रते इति रघुवरः अर्थात् सम्पूर्ण जीवमात्र उनका अपने स्वामी के रूप में वरण करते हैं। वे

धनुर्वेदविशारद अर्थात् धनुर्वेद में कुशल हैं। समस्तमंगलों के आयतन अर्थात् घर हैं। वे दिव्यगुणों से सम्पन्न हैं, देवता हैं ऐसे कमललोचन भगवान् श्रीराम का स्मरण करना चाहिए। और साधक इनका स्मरण करके लोक परलोक दोनों में सुख पा सकता है।

यह श्लोक भगवान् श्रीराम की वैवाहिक घटनाओं की ओर इंगित करता है। **रामम्** श्रीराम ने अपने सौन्दर्य से समस्तमिथिलावासियों को आनन्दित किया और भगवती सीता को भी रमाया। **रघुवरम्**–रघुश्चासौ वरः रघुवरः शिव धनुर्भंग करके सीताजी की जयमाला धारण कर श्री राघव जी श्री जानकी जी के वर बने–रघुवर उर जयमाल देखि देव बरसे सुमन।

**वीरं**–वि अर्थात् विष्णुरूप परशुराम जी को भी उन्होंने अपने पराक्रम से कम्पित किया। जैसा कि वाल्मीकिरामायण के बालकांड के ७६वें सर्ग में कहा गया है कि भगवान् राम के तीर से परशुराम का पराक्रम समाप्त हो गया और वे कमललोचन श्रीराम को धीरे धीरे देखने लगे। मानस में भी परशुराम की इसी स्थिति का वर्णन है–

**बहइ न हाथ दहरि रिसि छाती। भा कुठार कुंठित नृप घाती।**

**धनुर्वेद विशारदम्**–धनुर्वेद में कुशल होने से प्रभु श्रीराम ने परशुराम से वैष्णव धनुष स्वीकारा–

**देत चापु आपुहि चलि गयउ।**
**परसुराम मन विस्मय भयउ।।**

**मंगलायतनम्**–भगवान समस्त मंगलों के आगार हैं अतएव–

**मंगल मूल लगन दिन आवा। हिमरितु अगहन मास सुहावा।**

अर्थात् परममंगलस्वरूप सीताजी का श्रीराम के साथ पाणिग्रहण हुआ। **देवं**–भगवान श्रीराम देवाधिदेव हैं, इसलिए सभी देवता उनके विवाह में सम्मिलित हुए और भगवती सीता को निहारकर उनके राजीवलोचन खिल उठे। और प्रभु के कमलनेत्र की रसमाधुरी हेतु मिथिलावासियों के मन भौंरों की भाँति मँडराये।।श्री।।

**सर्वशास्त्रार्थतत्त्वज्ञ मानन्दकरसुन्दरम्।**
**कौसल्यानन्दनं रामं धनुर्वाणधरं हरिम्।।२२।।**

**रा०कृ०भा०**–सर्वेषां शास्त्राणां अर्थं तत्वं च जानाति इति सर्व–शास्त्रार्थतत्त्वज्ञस्तम्, आनन्दयन्तीति आनन्दाः आनन्दकराः किरणाः यस्य स आनन्दकरः चन्द्रमा तद्वत् सुन्दरम्, कौसल्यां नन्दयतीति कौसल्यानन्दनस्तं धनुर्बाणं धरतीति धनुर्बाणधरः तथाभूतं हरिम् श्रीरामं स्मरेत्॥श्रीः॥

**राघवकृपाभाष्य**–सम्पूर्ण शास्त्रों के अर्थ एवं तत्त्व को जानने वाले, चन्द्रमा के समान सुन्दर कौसल्या के नन्दन, धनुर्बाणधारी ऐसे हरि सम्पूर्णभक्तों के क्लेश को हरनेवाले प्रभु श्रीराम का स्मरण करें।

भगवान् राम सम्पूर्ण शास्त्रों के अर्थ और तत्त्व दोनों जानते हैं। उनके लिए कहा भी जाता है कि–

**सर्वशास्त्रार्थतत्त्वज्ञः स्मृतिमान् प्रतिभानवान्।**
**सर्वलोककप्रियः साधुरदीनात्मा विचक्षणः।।**

समस्त वेद, वेदांग इन सबके प्रभु ज्ञाता हैं। वास्तव में सम्पूर्ण श्रुतियाँ ही उनके श्वासमात्र तुल्य हैं लीला हो रही है। इसलिए गोस्वामीजी ने कहा भी है–

**गुरु गृह गये पढन रघुराई। अलपकाल विद्या सब आई।**
**जाके सहज स्वास श्रुति चारी। सो प्रभु पढ़ यह कौतुक भारी।।**

समस्त श्रुतियाँ जिनके श्वासभूत हैं, वे प्रभु आज यहाँ पढ़ रहे हैं, यह कौतुकमात्र है। भगवान् को विद्यानिधि कहा गया है–

**जिह्वां विद्यानिधिः पातु।**
**विद्यानिधि कहँ विद्या दीनी।**

और **आनन्दकरसुन्दरम्**–आनन्दकर चन्द्रमा के समान सुन्दर अथवा आनन्दकरः सुन्दरः यस्मात् येन अर्थात् चन्द्रमा भी जिनके कारण सुन्दर लगते हैं। श्री रामचन्द्र से ही चन्द्रमा को सुन्दरता मिली है। ऐसे **कौसल्यानन्दनम्** कौसल्या जी को आनन्दित करने वाले धनुर्बाणधारी श्रीराम का सादर स्मरण करे।

❁ **एवं संचिन्तयन् विष्णुं यज्ज्योतिरमलं विभुम्।**
**प्रहृष्टमानसो भूत्वा मुनिवर्यः स नारदः।।२३।।**

❁ **सर्वलोक हितार्थाय तुष्टाव रघुनन्दनम्।**
**कृताञ्जलिपुटो भूत्वा चिन्तयन्नद्भुतं हरिम्।।२४।।**

**रा०कृ०भा०—**एवं यद्अमलंज्योतिः तं विभुं विष्णुं संचिन्तयन् प्रहृष्टमानसः भूत्वा मुनिवर्यः सः नारदः कृताञ्जलिपुटः भूत्वा अद्भुतं हरिं चिन्तयन् सर्वलोकहितार्थाय रघुनन्दनं तुष्टाव।

श्लोकद्वयमत्र एकान्वयि। एवं पूर्वोक्तप्रकार सूचकैः द्वादशभिः श्लोकैः यत् ज्योतिः परमप्रकाशरूपं, अमलं निर्विकारं मायाविकाररहितं वा शिवं परमकल्याणस्वरूपं तमेव विभुं विष्णुं सर्वव्यापकं विवेष्टीति विष्णुः इति निरुक्तेः। यद्वा विशेषण स्नौति इति विष्णुः तम् परमकरुणानिधिं संचिन्तयन् सम्यक्प्रकारेण चिन्तनविषयं कुर्वन् प्रहृष्टं मानसं यस्य सः प्रहृष्टमानसः प्रसन्नमनाः भूत्वा मुनिवर्यः मुनिश्रेष्ठः स नारदः देवर्षिः अद्भुतं सकललोकविलक्षणम् हरिं भक्तचेतोऽपहारकं श्रीरामं चिन्तयन् ऐश्वर्यदृष्ट्या श्रीराघवं चिन्तनविषयं कुर्वन् कृताञ्जलिपुटः कृतं अञ्जल्योः पुटं सम्पुटं येन तथाभूतो भूत्वा, सर्वेषां लोकानां हितमेव अर्थः सर्वलोकहितार्थः तस्मै सर्वलोकहितार्थाय सकललोककल्याणचिकीर्षया तुष्टाव स्तुतिविषयं चकार।।श्रीः।।

**राघवकृपाभाष्य—**इस प्रकार से बारह श्लोकों में वर्णित तीन ध्यानों के द्वारा जो ज्योतिरूप से प्रसिद्ध हैं, जो निर्विकार हैं, जो सकलकल्याणगुणगणनिलय हैं ऐसे सर्वव्यापक महाविष्णु श्रीराम का चिन्तन करते हुए, प्रसन्नमन होकर और प्रभु के समक्ष हाथ जोड़कर अद्भुत स्वरूपसम्पन्न श्रीराम का ऐश्वर्यदृष्टि से पुनश्चिन्तन करतेहुए सर्वलोकहितार्थाय अर्थात् सम्पूर्ण लोकों का हित करने के लिए रघुनन्दनम् रघुवंशियों को आनन्द देने वाले एवं पापपुण्य का लंघन करने वाले ऐसे जीवों को भी आनन्दित करने वाले प्रभु श्रीराम की भगवान् नारद ने स्तुति की।

यहाँ 'चिन्तयम्' और संचिन्तयन्' इसका तात्पर्य यह है कि पहले तो नारद जी ने भगवान्का माधुर्यभाव से चिन्तन किया ध्यान किया और फिर ऐश्वर्यभाव से उनका स्मरण किया। स्मृत्यनुकूलव्यापार को ध्यान कहते हैं और स्मरण उससे जनित क्रिया हुआ करती है। और अब नारद जी महाराज सभी लोगों का हित करने के लिए श्रीराम की स्तुति कर रहे हैं। इस स्तुति से सारे संसार का कल्याण होगा। इसमें भगवान् के नाम, रूप, लीला, धाम और संकीर्तन और उनके उस निर्विकार निष्कल स्वरूप का मनन तथा प्रभु के परत्व का पद पद पर प्रतिपादन होगा॥श्री॥

नारद उवाच नारदः अब्रवीत्—भगवान् नारद बोले—

**यदेकं यत्परं नित्यं यदनन्तं चिदात्मकम्।**
**यदेकं व्यापकं लोके तद्रूपं चिन्तयाम्यहम्।।२५।।**

**रा०कृ०भा०**—नारदस्य चिन्तनप्रकारमाह–इयं स्तोत्रपूर्वभूमिका। यत् एकं अद्वितीयं यच्च परं सर्वेषां परायणम् सर्वश्रेष्ठम्। यथा—

**इन्द्रियेभ्यः पराःह्यर्थाः अर्थेभ्यश्च परं मनः।**
**मनसस्तु पराबुद्धिः बुद्धेरात्मा परो महान्।।**
**महतः परमव्यक्तं अव्यक्तात्पुरुषः परः।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः।।**

कठो० १/३/१०-१२

अर्थात् इन्द्रियेभ्यः चक्षुरादिभ्यः पराः अर्थाः विषयाः एभ्यश्च परं मनः सूक्ष्मम्। मनसश्च परा बहिर्भूता सूक्ष्मा च बुद्धिः बुद्धेरपेक्षयाऽपि महान् आत्मा परः सूक्ष्मः श्रेष्ठश्च। महतः परमव्यक्तं सूक्ष्मशरीरम्। तस्माच्च अव्यक्तात् पुरुषः परः परमात्मा, पुरुषात् किमपि परं नास्ति। सैव सर्वेषां काष्ठा सैव सर्वेषां गतिरिति श्रौतोऽर्थः।

इह परत्वमीमांसायां आत्मनः परमव्यक्तमव्यक्तात्परं परमात्मतत्त्व मिति जीवात्मपरमात्मनोः सुतरां भेदः प्रतिपादितः। एवम्भूतं यत् परमात्मतत्त्वं सर्वतोऽपि परम्। यच्च नित्यम् त्रिकालसत्यम् अविनाशि तत्त्वम् ध्वंसभिन्नं यत् ध्वंसाप्रतियोगित्वम्। यत् अनन्तं अन्तरहितम् यच्च चिदात्मकं

चित् आत्मा स्वरूपं यस्य अथवा चिदश्च ते आत्मानः चिदात्मानः चित्स्वरूपाः जीवाः तेभ्यः कं सुखं यस्मात् तत् चिदात्मकम्। यच्च एकं अकारो वासुदेवः तस्मिन् कं सुखं यस्मात् तदेकम्। यच्च लोके व्यापकं सर्वव्यापकं तद्रूपं ऐश्वर्यपूर्णमहं चिन्तयामि चिन्तनविषयीकरोमि।

इह सप्तभिर्विशेषणैर्भगवदैश्वर्यमयं रूपं वर्णयन् एषां चिन्तनेन सप्तावरणभङ्गं प्रार्थयते नारदः॥श्रीः॥

**राघवकृपाभाष्य**–जो एक अर्थात् अद्वितीय है, जो सबसे परे अर्थात् सभी कारणों से सूक्ष्म और सबका परायण है जैसा कि कठोपनिषद् में कहा गया है–इन्द्रियों से सूक्ष्म है विषय, विषयों से सूक्ष्म है मन, मन से भी बुद्धि सूक्ष्म है और बुद्धि से भी सूक्ष्म है यह महान् आत्मा, इस आत्मा से भी पर है सूक्ष्म शरीर और उससे पर है परमपुरुष परमात्मा। परमात्मा से कोई भी सूक्ष्म या श्रेष्ठ नहीं है। वही सबकी सीमा है, वही सबका गन्तव्य स्थान है। इस प्रकार 'बुद्धेरात्मा परो महान्' कहकर 'अव्यक्तात्पुरुषः परः' कहती हुई श्रुति ने स्पष्ट ही जीवात्मा और परमात्मा का स्वरूप से भेद सिद्ध कर दिया। क्योंकि आत्मा से परे अव्यक्त है और अव्यक्त से परे पुरुष है। इस प्रकार आत्मा और परमात्मा के बीच में अव्यक्त तत्त्व भी है। अतः जीवात्मा और परमात्मा का अभेद सम्भव ही नहीं है। जो नित्य है अर्थात् ध्वसं से भिन्न होकर ध्वंसकाअप्रतियोगी है जिसका कभी नाश नहीं होता, जो अनन्त है, जिसका अन्त नहीं होता, चिदात्मक है जिसका स्वरूप चेतनामय है अथवा चित् है जीवात्मतत्त्व, चिद्रूपजीवात्माओं को जिनसे 'क' अर्थात् सुख प्राप्त होता है, उन परमात्मा को चिदात्मक कहते हैं। इसलिए गोस्वामी जी कहते हैं–

**जो आनन्दसिन्धु सुखरासी। सीकर तैं त्रैलोक सुपासी।**
**सो सुखधाम राम अस नामा। अखिललोकदायक विश्रामा॥**

भगवान् आनन्दसिन्धु हैं, सुख की राशि हैं। भगवान् के आनन्द के एक छींटे से तीनों लोक आनन्दित होते रहते हैं। जो एक अर्थात् 'अकार' वासुदेव को ही 'क' अर्थात् सुख देने वाले हैं, जो व्यापक अर्थात् लोक में

सर्वत्र विराजमान हैं, सर्वदेश में उनकी सत्ता है, ऐसे परमात्मा के ऐश्वर्यमयरूप का मैं चिन्तन करता हूँ॥श्री॥

अन्यच्च–


**विज्ञानहेतुं विमलायताक्षं प्रज्ञानरूपं स्वसुखैकहेतुम्।**
**श्रीरामचन्द्रं हरिमादिदेवं परात्परं राममहं भजामि॥२६॥**

**रा०कृ०भा०–**विज्ञानं नाम विशिष्टं ज्ञानम् तस्य हेतुः विज्ञानहेतुः तम् विज्ञानकारणभूतं, विमले निर्मले आयते विशाले अक्ष्णी यस्य स विमलायताक्षः तं विमलायताक्षम् निर्मल विशालनेत्रम्। प्रज्ञानं ब्रह्म तदेवरूपं यस्य सः प्रज्ञानरूपः तं प्रज्ञानरूपम्। स्वेषां भक्तानां यत्सुखं स्वसुखं तस्य एकं हेतुभूतम्। हरिं हरति पापानि इति हरिः तं आदिदेवं आदिश्चासौदेवः आदिदेवः तथाभूतं श्रीरामचन्द्रं सीतया सहितं रामचन्द्राख्यं परात्परं बुद्धेः परो जीवात्मा तस्मादपि परं परात्मपरम् इह 'पूर्वादिभ्यो नवभ्यो वा' इत्यनेन स्मादादेशविकल्पात् परात् इति सिद्धम् परात्परम् जीवात्मतत्त्वतोऽपि परभूतं रामं योगिरमणस्थानं रामपदवाच्यं परमात्मानं परब्रह्म अहं भजामि सेवे॥श्रीः॥

**राघवकृपाभाष्य–**जो विज्ञान अर्थात् विशिष्ट ज्ञान के हेतु हैं, जिनके नेत्र विमल, निर्मल तथा विशाल हैं जो प्रज्ञान अर्थात् ब्रह्मस्वरूप हैं, जो स्व यानि अपने भक्तों के सुख के एकमात्र हेतु हैं, जो श्रीरामचन्द्र, सीताजी के सहित रामचन्द्र रूप में रघुकुल में विराजमान हैं, जो हरि हैं, अर्थात् सम्पूर्ण भूतों के कष्ट को दूर करने वाले हैं, जो आदिदेव हैं, ऐसे जीवात्मतत्त्व से भी परे परमात्मतत्त्वरूप श्रुतिस्मृतिपुराणवेद्य श्रीराम का मैं भजन करता हूँ॥श्री॥


**कविं पुराणं पुरुषं पुरस्तात् सनातनं योगिनमीशितारम्।**
**अणोरणीयांसमनन्तवीर्यं प्राणेश्वरं राममसौ ददर्श॥२७॥**

**रा०कृ०भा०–**अन्वयः सुगमः। कविं क्रान्तद्रष्टारं, पुराणं पुरापि नवीनतया विद्यमानम् पुरातनम् पुरुषं पुरि शरीरे उ निश्चयेन शेते इति पुरुषम् जीवात्मना सह हृदेशेऽन्तर्यामिरूपेण वर्तमानम् एवम्भूतं सनातनं

शाश्वतम् सदा विराजमानम् योगिनं सकलयोगनिधानम्, ईशितारं सर्वेषां प्रशासकं अणोणीयांसम् अणोः जीवादपि अणीयासं सूक्ष्मतरं अनन्तं नाशरहितं, वीर्यं पराक्रमं यस्य तं एवम्भूतं प्राणेश्वरं सर्वेषां प्राणानामीश्वरं श्रीराम पुरस्तात् आत्मनः पुरस्तात् चिन्तनमात्रेण नारदः ददर्श समवलोकयामास। इति चिन्तनमहात्म्यम्।।श्रीः।।

**राघवकृपाभाष्य—**अब नारद जी के चिन्तन का माहात्म्य कहते हैं—

ज्योंही नारद जी ने चिन्तन करना प्रारम्भ किया, उसी समय भगवान् नारद ने अपने समक्ष कवि अर्थात् अत्यन्त मनीषी, पुराणपुरुषोत्तम, सनातन, सकलयोगों के निधान, सबके प्रशासक अणुजीव से भी सूक्ष्म, अनन्त–वीर्यसम्पन्न, संसार के प्राणेश्वर भगवान् श्रीराम जी के दर्शन किये। अर्थात् चिन्तनमात्र से भगवान् श्रीराम नारद के सामने प्रकट हो गये, और उन्होंने उन्हें अर्थात् श्रीराम को कवि, पुराण, पुरुष, सनातन, योगी, ईशिता, अणोरणीयान्, अनन्तवीर्य तथा प्राणेश्वर इन नौ रूपों में नौ गुणों से सम्पन्न देखा और पूर्णता का अनुभव किया क्योंकि नौ संख्या ही पूर्ण है। और भगवान का आविर्भाव भी नवमी को ही हुआ। इसलिए उनके लिए यहाँ नौ विशेषण उपयुक्त ही हैं।।श्री।।

अथ नारदः पंचाशत् श्लोकैः स्तोतुमुपक्रमते। और अब नारद जी ५० श्लोकों से प्रभुकी स्तुति का उपक्रम करते हैं—

**श्री नारद उवाच, नारदस्तुष्टाव।**

अत्र उवाचेति पदं स्तुत्यर्थकम्। नारद जी ने स्तुति की। यहाँ 'उवाच' पद स्तुतिपरक है।



**नारायणं जगन्नाथमभिरामं जगत्पतिम्।**
**कविं पुराणं वागीशं रामं दशरथात्मजम्।।२८।।**

**रा०कृ०भा०—**इह ऊनपञ्चाशत्तमे प्रयुक्तं 'प्रणमामीति' अनुषज्यते। नारायणं जगन्नाथं अभिरामं जगत्पतिं कविं पुराणं वागीशं दशरथात्मजं रामं अहं प्रणमामि इत्यन्वयः नारायणं नारायणस्वरूपम्—

**आपो नारा इति प्रोक्ता नारा वै नरसूनवः।**
**तदस्यायनमित्येव तेन नारायणः स्मृतः।।**

अथवा–नरस्य नरपतेः दशरथस्य अयनं नारायणम् अयोध्या तस्मिन् जातः भवो वा नारायणः 'तत्र जातः तत्र भवः' इति सूत्राभ्यां जातार्थे भवार्थे वा अण् प्रत्ययः। अथवा अयनं गृहं तच्च गृहिणीपरकं 'गृहिणी गृहमुच्यते' नरस्य दशरथस्य अयनं गृहं गृहिणी कौसल्यानरायणम् तस्मिन् नरायणे कौसल्यानामके जातः इति नारायणः तं नारायणम् कौसल्याकुक्षौ प्रकटितम्। जगतां नाथं जगन्नाथं जगच्छासकम्, अभिरामं अभीष्टान् रमयति इति अभिरामस्तं अभिरामं, जगतां पतिः जगत्पतिः तं जगत्पतिम् संसारस्य स्वामिनं कविं मनीषिणं पुराणं पुरातनम् पुरापि नवं वा, वाचोईशः वागीशस्तं वागीशम्, दशरथात्मजं दशरथस्य आत्मजं पुत्रं यद्वा दशसु दिक्षु रथो यस्य स दशरथः तस्य आत्मा पत्नी कौसल्या दशरथात्मा तस्मिन् जातः दशरथात्मजः तं दशरथात्मजम् दशरथपत्न्यां गृहीतजन्मानं एवम्भूतं रामं परमात्मानं योगिरमणस्थानं योगिरमणाधिकरणं अहं प्रणमामि॥श्रीः॥

**राघवकृपाभाष्य–**मैं नारायण जगन्नाथ अभिराम सबको आनन्द देने वाले जगत् के पति, कवि, पुरातन, वागीश अर्थात् वाणी के ईश्वर ऐसे दशरथात्मज दशरथपुत्र अथवा दशरथ जी की गृहिणी पत्नी कौसल्या में प्रकट होने वाले श्रीराम को प्रणाम कर रहा हूँ।

संस्कृत में जल को नार कहते हैं। क्योंकि नर से प्रकट होने वाले को भी नार कहते हैं, वही नार अर्थात् जल जिसका अयन यानी घर है, वही नारायण है। अथवा–नर अर्थात् दशरथ का अयन गृह अयोध्या ही नरायण है और नरायन में उत्पन्न होने के कारण भगवान् श्रीराम नारायण हैं। अथवा–यहाँ अयन शब्द का अर्थ है गृह और गृहिणी को ही गृह कहते हैं 'गृहिणी गृहमुच्यते' इसलिए नरपति दशरथ जी के अयन गृह की पर्यायभूत गृहिणी कौसल्या जी में जन्म लेने के कारण भगवान् श्रीराम को नारायण कहा जाता है। वे जगत् के नाथ हैं, ईश्वर हैं, अभीष्टों को रमानेवाले, जगत् के स्वामी, परम मनस्वी, पहले भी नये के समान दिख पड़ने वाले वागीश वाणी के ईश्वर ऐसे दशरथपुत्र अथवा दशरथ की आत्मा अर्थात् पत्नी कौसल्या में प्रकट होने वाले भगवान् श्रीराम को मैं प्रणाम करता हूँ।


**राजराजं रघुवरं कौसल्यानन्दवर्धनम्।**
**भर्गं वरेण्यं विश्वेशं रघुनाथं जगद्गुरुम्।।२९।।**

**रा०कृ०भा०**–राज्ञां राजा इति राजराजः तं राजराजम्, रघुभिर्जीवैः व्रियते इति रघुवरस्तं रघुवरम्, यद्वा–रघुभ्यो जीवेभ्यो वं अमृतं राति ददाति इति रघुवरस्तं रघुवरम्।, यद्वा उः उकारः शिवः अः वासुदेवः उश्च अश्च वौ तौ एव रघुभ्यः वौ राति इति रघुवरस्तं रघुवरम्, कौसल्यायाः आनन्दं वर्धयतीति कौसल्यानन्दवर्धनस्तं कौसल्यानन्दवर्धनम्।, भर्गं भृज्यति भस्मीकरोति पापपुण्यानि जीवानां यः सः भर्गस्तं भर्गम् वरेण्यं सर्वेषां जीवानां वरणार्हं, विश्वेशं विश्वानां विश्वेषां वा ईशं विश्वेशम्, रघूणां नाथं रघुनाथं जगतां गुरुं जगद्गुरुम् एवम्भूतं श्रीरामचन्द्रं अहं प्रणमामि।।श्रीः।।

**राघवकृपाभाष्य**–जो राजाओं के भी राजा हैं, जो रघुकुल में श्रेष्ठ हैं अथवा रघु जीवों द्वारा जिनका अपने नाथ के रूप में वरण किया गया है अथवा–रघु इन अपने जीवों को जीवात्माओं को जो व अर्थात् उकारपदवाच्य शंकर और अकारपदवाच्य विष्णु को भी दान करते हैं अर्थात् शैव वैष्णवों का जिनमें समन्वय है, अथवा जो जीवों को 'व' अर्थात् अमृत देते हैं ऐसे कौसल्या जी के आनन्द को बढ़ाने वाले भर्ग अर्थात् पाप और पुण्य के बीजों को भून देने वाले वरेण्य सबके द्वारा वरण करने योग्य, विश्व के ईश्वर, जगत् के गुरु श्री रघुनाथ जी को मैं प्रणाम करता हूँ।।श्री।।


**सत्यं सत्यप्रियं श्रेष्ठं जानकीवल्लभं विभुम्।**
**सौमित्रिपूर्वजं शान्तं कामदं कमलेक्षणम्।।३०।।**

**रा०कृ०भा०**–अन्वयः सुगमः। सत्यं सदेव सत्यम्। शाखदित्वात् यः प्रत्ययः स्वार्थे यद्वा सद्भ्यो हित सत्यम्। सद्धितैषिणम् गवादित्वात् यत्प्रत्ययो हिते सत्यप्रियम् सत्यं सत्यभाषणं प्रियं यस्य तथाभूतम् श्रेष्ठं सर्ववरिष्ठं, जानक्या वल्लभं जानकीवल्लभं अर्थात् जानकीवरम् विभुं सर्वव्यापकम् सौमित्रिपूर्वजं सौमित्रिः लक्ष्मणः तस्य पूर्वजः ज्येष्ठभ्राता तं सौमित्रिपूर्वजं शान्तं सकलोपद्रवप्रशमनं कामदं कामान् धर्मानुकूलान् ददाति इति कामदः

यद्वा कामं मनोजरूपं कामं द्यतिखण्डयति इति कामदः, यद्वा कः ब्रह्मा अः विष्णुः मः महेश्वरः त्रीनपि चन्द्रमो दत्तात्रेय दुर्वासारूपेण विराजमानम् अत्र्यनुसूयाभ्यां ददाति इति कामदः तं कामदं अथवा काम्यते इति कामः भगवान् रामः तं स्वमेव ददाति कामदस्तं कामदम्, अथवा भक्ताना अनुजिघृक्षया गृहीत कामदगिरिस्वरूपं यद्वा अर्श आद्यजन्तमेतत्। तथा हि कामदः शैलशिरोमणिः कामदगिरिः अस्ति विहारस्थलमस्य इति कामदः तं कामदम्। कमलेक्षणं कमलवत् ईक्षणे यस्य सः कमलेक्षणः तं कमलेक्षणम् अथवा कमला मिथिलापुरनदी तस्यां तत्समीपे विहरति इति कमलाविहारिणी सीता तां कमलाविहारिणीं ईक्षते विलोकयति पुष्पवाटिकायां इति कमलेक्षणः कमलाविहारिण्याः ईक्षणः कमलेक्षणः तम्। अत्र शाकपार्थिवादित्वात् विहारिणी शब्दरूपे मध्यमपदलोपसमासविधया निष्पत्तिरिति राघवीयः। एवम्भूतं श्रीरामं अहं प्रणमामि॥श्रीः॥

**राघवकृपाभाष्य**–जो सत्य अर्थात् सत्स्वरूप हैं एवं सत्य अर्थात् सन्तों के हितैषी हैं, सत्य ही जिन्हें प्रिय है, जो श्रेष्ठ हैं, जो जानकीवल्लभ सीतापति हैं, जो विभु अर्थात् सर्वव्यापक हैं, जो सौमित्रि अर्थात् लक्ष्मण जी के बड़े भ्राता हैं, जो शान्त हैं, जो कामद अर्थात् भक्तों को कामनाएँ प्रदान करने वाले हैं और भक्तों की असत् कामनाओं को द्यति अर्थात् नष्ट भी कर डालते हैं, जो कामद अर्थात् ककारमय भगवान ब्रह्मा, अकार अर्थात् विष्णु, मकार महेश्वर अर्थात् इन तीनों को ही अत्रि अनूसूया जैसे भागवतों को अर्पित कर देते हैं जैसे पुराणप्रसिद्धि है कि अनुसूया जी के तप से प्रसन्न होकर भगवान ने ब्रह्मारूप में चन्द्रमा, विष्णु अंश दत्तात्रेय तथा शंकर अंश दुर्वासा जी को अनसूया के आश्रम में तीन पुत्र रूप में प्रकट किया अथवा जो स्वयं कामदगिरिस्वरूप एवं कामदपर्वत पर विहार करते हैं, ऐसे कमलनयन एवं कमलाविहारिणी श्रीसीताजी को प्रेमपूर्वक निहार रहे भगवान् श्रीराम को मैं प्रणाम करता हूँ।

**विशेष**–यहाँ कमलाविहारिण्या ईक्षणः कमलेक्षणः इस प्रकार विग्रह करके ईक्ष् धातु से कर्ता में ल्युट् तथा शाकपार्थिवादित्वात् विहारिणी शब्द का मध्यमपदलोप करके कमलेक्षण शब्द की निष्पत्ति की गई। श्रीमिथिला

में कमला नदी प्रसिद्ध विराजती हैं उनके तट पर श्रीसीताजी का बाल विहार प्रसिद्ध है॥श्री॥



**आदित्यं रविमीशानं घृणिं सूर्यमनामयम्।**
**आनन्दरूपिणं सौम्यं राघवं करुणामयम्॥३१॥**

**रा०कृ०भा०**–आदित्यं अदितिकुलोत्पन्नं अथवा आदित्याय हितं आदित्यं उगवादित्वात् हितार्थे यत् प्रत्ययः। पुनश्च पूर्वयोः अकारयकार-योर्लोपः एवम्भूतं आदित्यम् सूर्यनारायणहितैषिणं, रविः रूयते स्तूयते इति रविः तादृशं रविं सूर्यम्, सूर्यरूपं जगत्स्तुत्यं वा ईशानं सर्वशक्ति-समन्विततया ईशानं सर्वेषां शाश्वतम् घृणिं किरणमयं सूर्यं सर्वेषां प्रेरकं अनामयं आमय विकाररहितं आनन्दरूपिणं आनन्दं रूपयति बोधयति इति आनन्दरूपी तं आनन्दरूपपिणं एवम्भूतं सौम्यं सोमश्चन्द्रः ब्राह्मणानां राजा ब्राह्मणमयो वा तस्मै हितः सौम्यः बाहुलकात् हितार्थे ष्यञ् तं ब्राह्मण-हितमिति भावः। अथवा उमया पार्वत्या सहितः सोमः साम्बः शिवः तस्य सोमस्य साम्बशिवस्य अयं सम्बन्धी प्रियश्च इति सौम्यः अत्रापीदमर्थे बाहुलकः ष्यञ्। करुणा एव करुणामयं करुणायाः प्राचुर्यं यस्मिन् एवम्भूतं करुणामयम् कृपायुक्तम् राघवं रघुषु भवं राघवं एवम्भूतं श्रीराममहं प्रणमामि॥श्रीः॥

**राघवकृपाभाष्य**—जो आदित्य अर्थात् सूर्यस्वरूप और सूर्य के हितैषी भी हैं, जो रवि अर्थात् सबके द्वारा स्तुति योग्य, ईशान अर्थात् सबके शासक, घृणि किरणमय एवं परमदयालु, सूर्य सबके प्रेरक अनामय अर्थात् विकाररहित और आनन्दस्वरूप, सौम्य, करुणामय श्रीराघव को मैं प्रणाम करता हूँ।

**विशेष**–यहाँ सौम्य शब्द बहुत महत्त्व का है। चन्द्रमा को सोम कहते हैं। वह स्वयं ब्राह्मण तथा ब्राह्मणों के राजा हैं। भगवान् श्रीराम उनके हितैषी हैं। इसलिए मानस जी में हनुमान जी ने कहा–शशि तुम्हार प्रिय दास। इससे श्रीराम सौम्य कहे जाते हैं। अथवा उमा पार्वती जी के सहित विराजमान होने से शिवजी सोम हैं। श्रीराम उन सोम शिवजी के प्रिय सम्बन्धी अर्थात् स्वामी हैं, इसलिए यहाँ प्रभु श्रीराम को सौम्य कहा गया है॥श्री॥


**जामदग्निं तपोमूर्तिं रामं परशुधारिणम्।**
**वाक्पतिं वरदं वाच्यं श्रीपतिं पक्षिवाहनम्।।३२।।**

**रा०कृ०भा०–**जमदग्नेरपत्यं पुमान् जामदग्न्यः तं जामदग्निं परशुरामं जमदग्नेश्चतुर्थपुत्ररूपं तप एव मूर्तिर्यस्य स तपोमूर्तिस्तं तपोमूर्तिम्। तपोविग्रहं, परशुं धरति तच्छीलः परशुधारी तं परधुधारिणम् धृतपरशुं रामं परशुरामं वाक्पतिं वाचः पतिः वाक्पतिः षष्ठ्या इत्यस्य छन्दसि वा' इत्यनेन वैकल्पिको लोपः। वरदं वरान् ददातीति वरदस्तं वरदम्, वाच्यं सर्वेषामभिधेयभूतं श्रीपतिं श्रियः पतिः श्रीपतिः तथाभूतं विष्णुरूपम्, पक्षिवाहनम् पक्षी गरुड एव वाहनो यस्य तथाभूतं रामं रघूत्तमम् अहं प्रणमामि।।श्रीः।।

**राघवकृपाभाष्य–**जो जमदग्नि के पुत्र, तपोमूर्ति, परशुधारी, वाणी के पति, सबको वरदान देने वाले सबके वाच्य एवं श्रीलक्ष्मी के पति पक्षिवाहन विष्णुरूप हैं, ऐसे भगवान् श्रीराम को मैं प्रणाम करता हूँ।

**विशेष–**परशुरामावतार एवं वामनावतार के रूप में, क्योंकि वही परमात्मा जमदग्नि के चतुर्थपुत्र बनते हैं और तपस्या ही उनकी मूर्ति है। ऐसे परशु धारण करने वाले, वाणी के पति, सबको वरदान देने वाले, सबके वाच्य अभिधेयभूत श्रीपति पक्षिवाहन साक्षात् विष्णुरूप राम को मैं प्रणाम करता हूँ।

इस श्लोक के पूर्वार्ध में परशुरामावतार एवं उत्तरार्ध में वामनावतार रूप श्रीराम का स्तवन है। पूर्वार्ध में प्रयुक्त परशुराम के विशेषण तो स्पष्ट ही हैं। परशुराम जमदग्नि के पुत्र तपस्यामूर्ति और परशुधारण करने वाले हैं। यहाँ तीन विशेषणों से उनके जन्म, कर्म और तपस्या की सूचना दी गई है।

अब उत्तरार्ध में पाँच विशेषणों से वामन रूप भगवान राम के चरित्र का संकेत करते हैं। वाक्पतिम्–भगवान् वामन वाणी के पति हैं। इसी वाक् कुशलता से बलि जैसे परम वदान्य दैत्येन्द्र को भी चुप कराकर उन्होंने तीन ही पग भूमि माँगी। वे वरद हैं, पयोव्रत उपासना से संतुष्ट होकर

कश्यप और अदिति को उन्होंने स्वयं ही उनके पुत्र बनने का वरदान दे दिया। वे सबके वाच्य हैं इसीलिए सभी देवताओं ने भगवान् वामन को भिन्न-भिन्न उपहार देकर सुसज्जित किया। वे स्वयं श्री अर्थात् लक्ष्मी के पति हैं और लक्ष्मी भार्गवी कही जाती हैं इसलिए भगवान् वामन को बलि ने अपने जमाई अर्थात् छोटी बेटी के पति मानकर उनका उचित आतिथ्य किया। पक्षिवाहनम्-पक्षिराज गरुड़ भगवान के वाहन हैं। बलि को अवभृथ के दिन इन्हीं गरुड़ से भगवान् ने वारुण पाश में बँधवा लिया। यथा-

**अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितम्।**
**बबन्ध वारुणैः पाशैर्बलिं सौत्येऽहनिक्रतौ।।८/२१/२६**

भगवान् राम को मानस में भी वामनरूप कहा गया है। जैसे कि रावणवध के पश्चात् स्तुति करते हुए देवता कहते हैं-

**मीन कमठ सूकर नरहरी। बामन परसुराम बपु धरी।**
**जब जब नाथ सुरन्ह दुख पायो।**
**नाना तनु धरि तुम्हइँ नसायो।।**

अर्थात् हे प्रभु श्रीराम! मत्स्य, कच्छप, शूकर, नृसिंह, वामन एवं परशुराम शरीर धारण करके आपने सर्वावतारी होते हुए भी जब जब देवताओं पर कष्ट पड़ा, तब तब अनेक शरीर धारण करके उन्हें आप ही ने नष्ट किया। यहाँ भगवान् श्रीराम के सर्वावतारित्व का प्रकरण चल रहा है। अतः पहले प्रसिद्ध अवतारों के रूप में भगवान् श्रीराम की स्तुति करके फिर मत्स्यादि अवतारों की भी चर्चा करेंगे।।श्री।।

❁ **श्रीशार्ङ्गधारिणं रामं चिन्मयानन्द विग्रहम्।**
**हलधृग्विष्णुमीशानं बलरामं कृपानिधिम्।।३३।।**

**रा०कृ०भा०-**श्रीश्च शार्ङ्गं च श्रीशार्ङ्गे ते धरति तच्छील इति श्री शार्ङ्गधारी तं श्रीशार्ङ्गधारिणम् अर्थात् यः श्रियं लक्ष्मीं शार्ङ्गं स्वकीयं नित्यं धनुः स्वभावतः धरति, चिदेव चिन्मयः चिन्मयश्चासौ आनन्दः इति चिन्मयानन्दः, चिन्मयानन्दो विग्रहो यस्य एवम्भूतम्, हलं धरतीति हलधृक् श्री बलरामः हलधृक् एव विष्णुः विष्णुस्वरूपस्तम्। यद्वा नात्र समासः। हलधृक्

इति लुप्ततृतीयाकम्, यद्वा छान्दसि द्वितीयार्थे प्रथमा, ईशानं सर्वशासकम् कृपानिधिं बलरामं श्रीमद्धलधरं तद्रूपं वा श्रीरामचन्द्रमहं प्रणमामि। अथवा-एवम्भूतं हलं धरतीति हलधृक् तं विष्णुं सर्वव्यापकं ईशानं कृपानिधिं बलराममहं प्रणमामि। संस्कृतसाहित्ये प्रथमवारं बलरामशब्दस्यात्र प्रयोगः॥श्रीः॥

**राघवकृपाभाष्य—**श्री एवं शार्ङ्ग को धारण करने वाले, चिन्मयानन्द-स्वरूप, हल को धारण करने वाले, सर्वव्यापक, सबके शासक कृपानिधि बलरामरूप श्रीराम को मैं प्रणाम करता हूँ।

यहाँ पर श्री और शार्ङ्ग दोनों को भगवान् धारण करते हैं इसलिए इसका द्वन्द्व किया गया है। चिन्मयानन्द ही उनका विग्रह है। हलधृग्विष्णु-मीशानं-वे हलधर हैं, सर्वव्यापक हैं, सबके शासक हैं एवं करुणा के सागर हैं ऐसे बलरामरूप श्रीराम जी को मैं प्रणाम करता हूँ॥श्री॥



**श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम्।**
**मत्स्यकूर्मवराहादिरूपधारिणमव्ययम्॥३४॥**

**रा०कृ०भा०—**श्रियः वल्लभः श्रीवल्लभः, कृपां नाथते ईष्टे ऐश्वर्ययुक्तां करोति इति कृपानाथः कृपादायको वा तं, जगतो मोहनं जगन्मोहनं, अच्युतं अखण्डब्रह्मचर्यस्वरूपं, मत्स्यकूर्मवराहादिरूपधारिणम् आदिपदेन नृसिंह सनकादिनारदनरनायणकपिलदत्तात्रेययज्ञऋषभपृथुधन्वन्तरि व्यासहयग्रीवहंस-हरिबुद्धकल्पिकल्कनामपि ग्रहणम्। मुख्यावतारस्य कृष्णास्यानुपदमेव स्तवनं करिष्यते। मत्स्यकूर्मवराहा आदौ येषां तथाभूतानि रूपाणि। धारयति तच्छीलं अव्ययं अविनाशिनं श्रीरामं अहं नमामि॥श्रीः॥

**राघवकृपाभाष्य—**जो श्री अर्थात् लक्ष्मी जी के वल्लभ हैं। कृपा के नाथ अर्थात् दाता हैं। मोहिनीअवतार रूप से मोहक हैं। इसी अवतार से शंकर जी को भी मोहित कर लिया था फिर भी स्वयं अच्युत रहे। सारे संसार को मोहनीरूप से मोहित करने वाले, अच्युत तथा मत्स्यकूर्मवराहादि दिव्य अवतारों को धारण करके भी अव्यय अर्थात् विकार को न प्राप्त होने वाले ऐसे प्रभु श्रीराम को मैं नित्य प्रणाम करता हूँ॥श्री॥

**विशेष**–यहाँ आदिपद से नृसिंह, सनकादि, नारद, नर, नारायण, कपिल, दत्तात्रेय, यज्ञ, ऋषभ्, पृथु, धन्वन्तरि, व्यास, हृयग्रीव, हंस, हरि, बुद्ध, कल्कि आदि का भी ग्रहण किया गया है।।श्री।।

इदानीं चतुर्भिः श्लोकैः श्लेषभंगिम्ना कृष्णरूपं रामं स्तौति। कृष्णस्य ब्रजमथुराकुरुक्षेत्रद्वारकासु विहितालौकिकचरित्रत्वात्।

अब चार श्लोकों से श्लेषभंगिमा से श्रीकृष्णरूप राम की स्तुति करते हैं।

**वासुदेवं जगद्योनिमनादिनिधनं हरिम्।**
**गोविन्दं गोपतिं विष्णुं गोपीजनमनोहरम्।।३५।।**

**रा०कृ०भा०**–वासयतीति वासुः दीव्यतीति देवः वासुश्चासौदेवः इति वासुदेवः। वस्तुतस्तु–

**वासनाद् वासुदेवस्य वासितं भुवनत्रयम्।**
**सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते।।**

इति अभियुक्ताः। एवम्भूतं वासुदेवस्वरूपं जगद्योनिं जगतः योनिः यस्मात् तम् जगद्योनिम्, अनादिनिधनं न विद्यते आदिनिधने आरम्भमरणे यस्य तादृशम् हरिं हरितवर्णं गोविन्दं साक्षाद् भगवन्तं गवां पतिः गोपतिः तं गोपतिं एवम्भूतं गोपीजनमनोहरं गोपीजनमनोहारिणं विष्णुं कृष्णमयं रामं नमामि प्रणमामि।

इह अभिधया श्रीकृष्णमयस्य रामस्य नमस्कारः। स एव वासुदेवः तस्मादेव जगज्जायते। स एव अनादिनिधनः सर्वभूततापहारकः स एव गोविन्दः गोपतिः गोपीजनमनोहरं गोपीजनानां मनांसि हरति इति गोपीजनमनोहरः तं गोपीजनमनोहरं गोपीजनानां मनोहरणकर्तारम्। व्यञ्जनया श्रीरामपक्षे– वासुदेवः श्रीरामः व्युत्पत्तिस्तु प्रोक्तपूर्वा। गोपायतीति, गां पातीति वा गोपः जनकः तस्य पुत्री गोपी सीता गोप्याः सीतायाः जनानां मनो हरतीति गोपीजनमनोहरस्तं गोपीजनमनोहरम्। अर्थात् राजकन्याचित्तहारकं सीतासखीचित्तहारकं वा। एवम्भूतं भगवन्तं श्रीराममहं नमामि।।श्रीः।।

**राघवकृपाभाष्य**–जो संसार को अपने में बसाए हुए हैं और सबको

दिव्य प्रकाश दे रहे हैं ऐसे, जगत् जिनसे उत्पन्न होता है, जो जन्म और मरण से रहित हैं जो हरि अर्थात् सम्पूर्ण भूतों को आनन्द देने वाले हैं और जो गोविन्द हैं गौ अर्थात् इन्द्रिय, पृथ्वी, धेनु, वाणी के स्वामी हैं। जो साक्षात् सर्वव्यापक विष्णु हैं, जो गोपीजनों के मनों को प्रथम दर्शन में हर लेते हैं, उन्हीं परमात्मा को मैं प्रणाम करता हूँ।

**विशेष :** यह श्लोक अभिधा से भगवान् श्रीकृष्ण और व्यंजना से भगवान् श्रीराम का स्तवन करता है। इसके जगद्योनिं, अनादिनिधनं, हरिं, विष्णुं ये चार विशेषण द्वितीयान्त ऐश्वर्यपरक हैं जो दोनों अवतारों में समानरूप से घटेंगे। परन्तु वासुदेवं, गोविन्दं, गोपतिं, गोपीजनमनोहरम् इन चार माधुर्यपरक द्वितीयान्त विशेषणों में श्लेष अलंकार द्वारा वैयाकरणव्युत्पत्ति के आधार पर दोनों अवतारों की लीलाओं की दृष्टि से पृथक् अर्थ होंगे। वसुदेव जी के पुत्र होने से तथा वसुदेवतानन्द जी के नन्दन होने से भी भगवान् श्रीकृष्ण को वासुदेव कहा जाता है। वसुदेवस्य अपत्यं प्रमान् वासुदेवः। भगवान् श्रीकृष्ण नन्द की गायों के पालक हैं। उनको नन्दराय की गौएँ मिली हैं और श्रीराम को शासन के रूप में पृथ्वी, इन्द्रिय तथा वेदवाणी प्राप्त है। इसलिए दोनों ही गोविन्द हैं। भगवान् राम को भी जटायु जी गोविन्द कहते हैं—गोविन्द गोपर द्वन्द्वहर (मानस ३-३२ छन्द २) भगवान् श्रीकृष्ण गौओं के स्वामी हैं और भगवान् श्रीराम गौ अर्थात् पृथ्वी के। इससे दोनों ही गोपति कहे जाते हैं। भगवान श्रीकृष्ण श्रीराधा आदि गोपीजनों के मन को चुराने वाले हैं और भगवान् श्रीराम गोप अर्थात् पृथ्वीपालक जनक की पुत्री गोपी सीता के तथा उनके जन चारुशीला आदि अन्तरंग सखियों के मन को चुराने वाले (हरणकर्ता) हैं। श्रीसीता श्रीराम प्रेम को गुप्त रखती हैं—

**गूढ़ प्रेम लखि परत न काहू।**
**उर अनुभवति न कहि सकि सोउ।**
**कौन प्रकार कहै कवि कोउ॥**

इसलिए उन्हें गोपी कहते हैं। गोपायतीति गोपी। सीता जी अपनी नेत्रादि इन्द्रियों से भगवान् श्रीराम के रूपामृत, चरित्रामृत, स्पर्शामृत, सौगन्ध्यामृत, कथामृत का पान करती हैं इसलिए भी उनके लिए गोपी

शब्द संगत ही है। जैसा कि मानस में गोस्वामी जी भी कहते हैं—

**पुनि पुनि रामहिं चितव सिय सकुचति मन सकुचै न।**
**हरत मनोहर मीन छवि प्रेम पिआसे नैन॥(मानस १/३२६)**

गोभिः पिबतीति गोपी। उनके तथा उनके जनों के मनोहरण करने से श्रीराम भी गोपीजनमनोहर हैं॥श्री॥

**गोपालं गोपरीवारं गोपकन्या समावृतम्।**
**विद्युत्पुंजप्रतीकाशं रामं कृष्णं जगन्मयम्॥३६॥**

**रा०कृ०भा०**—गोपालं गाः पालयतीति गोपालस्तं गोपालं, गोपरीवारं गोभिः परिव्रियते इति गोपरीवरस्तं अथवा गाव एव परिवारो यस्य स गोपरीवारः। स्वयमेव भगवतैव पद्मपुराणे प्रोक्तत्वात्—

**गावो मे पुरतः सन्तु गावो मे सन्तु पृष्ठतः।**
**गावो मे मध्यतः सन्तु गवां मध्ये वसाम्यहम्॥**

एवम्भूतं गोपरीवारं तथैव गोपकन्यासमावृतम् गोपानां कन्याः गोपकन्याः ताभिः समावृतं अनन्तगोपीपरिवृतमिति भावः। विद्युतां पुंजं चपलासमूहः तस्य प्रतीकाशं समानं तेजोमयं यद्वा पीतशरीरगोपीभिः परिवृतत्वात् समभिभूतनीलकान्तिम् एवम्भूतं कृष्णं श्रीकृष्णरूपं जगन्मयं रामं नमामि। श्रीरामपक्षे गोपालं गोः पृथिव्याः पालकं महाराजं धेनुवत्सलत्वात् अयोध्यागोशालासु संरक्षितविपुलगोत्वाच्च गवां परिवारो यस्य तथाभूतम्। एवं गोपस्य जनकस्य कन्यया सीतया समावृतं अंचलेन सम्यगावृतं तथैव सीतापीतवर्णेन स्वनीलिम्नोऽभिभवात् विद्युत्पुंजप्रतीकाशं तादृशं कृष्णं सर्वाकर्षकं जगद्रूपं राममहं नमामि इति रामपक्षीयोऽर्थः॥श्रीः॥

**राघवकृपाभाष्य**—गौओं के पालक, गौओं के परिवार को धारण करने वाले और गोपकन्या अर्थात् राजकन्या सीताजी से समावृत ऐसे विद्युत्पुंज के समान तेजस्वी और जगत् के आदिकारणभूत रामाभिन्न श्रीकृष्ण को मैं प्रणाम करता हूँ।

यहाँ पर श्रीराम को कृष्णरूप में देखा गया है। यद्यपि अन्य टीकाकारों

और भाष्यकारों ने इसकी व्युत्पत्ति करके भिन्न-भिन्न अर्थ भी किये हैं परन्तु अभिधेयार्थ का अपलाप नहीं करना चाहिए। अभिधेय अर्थ में साक्षात् श्रीकृष्ण में भगवान् राम को देखा गया है इसलिए रामं कृष्णं कहते हैं।

जो साक्षात् गौओं के पालक हैं और गौओं का परिवार जिनके साथ है अर्थात् इन्द्रियों का परिवार भी उनके साथ है। जो गोपकन्या अर्थात् गोपों की कन्याओं से युक्त हैं। अर्थात् गोप श्रीजनक जी की कन्या सीताजी से जो भगवान् युक्त हैं। इस प्रकार विद्युत्पुंज के समान बिजली के समान तेजस्वी वस्त्र धारण किये हुए जगत् के आदिकारणभूत जगत्स्वरूप ऐसे श्रीकृष्ण से अभिन्न श्रीराम को मैं प्रणाम करता हूँ। यहाँ श्रीकृष्णपरक अर्थ तो सुस्पष्ट ही है अर्थात् गोपाल गौओं के परिवार से युक्त, गोपकन्या अर्थात् व्रजबालाओं से घिरे हुए व्रजदेवियों की शरीर कान्ति से अपनी नीलकान्ति के ढक जाने से विद्युत्समूह के समान दिखनेवाले परमतेजोमय, जगत् के कारणरूप श्रीरामाभिन्न श्रीकृष्ण को मैं प्रणाम करता हूँ।।श्री।।



**गोगोपिकासमाकीर्णं वेनुवादन तत्परम्।**
**कामरूपं कलावन्तं कामिनीकामदं प्रभुम्।।३७।।**

**रा०कृ०भा०**–अनुकम्पिताः भगवदंगसंगेन कृतार्थीकृता गोप्यः इति गोपिकाः। गावश्च गोपिकाश्च गोगोपिकाः ताभिः समाकीर्णं समावृतं वेणुर्नाम वंशी वं ब्रह्मसुखं इ मायासुखं तावपि अणू सूक्ष्मौ यस्मात् सः वेणुः तस्य वादनं वेणुवादनम् तस्मिन् तत्परम्, कामरूपं काम्यते इति कामम्। कामं रूपं यस्य सः कामरूपः तं कामरूपम्। विशिष्टाः सकलाः कलाः सन्ति यस्मिन् इति कलावान् तं कलावन्तम्। कामिनीकामदं कामिन्यः श्रीव्रजाङ्गनाः तासां कामान् ददाति इति कामिनीकामदः तं प्रभुं सर्वसमर्थं श्रीकृष्णरूपं भगवन्तं श्रीरामं अहं प्रणमामि इति सरलार्थः।

उपक्रमे 'विद्युत् पुंजप्रतीकाशं रामं कृष्णं जगन्मयम्' इति कथितम्। तस्यैव कृष्णाभिन्नस्य रामस्य कृष्णचरित्रनायकत्वं द्योतयति। यथा पूर्वमेव मयोक्तम्–यद्रामकृष्णयोर्मध्ये न कश्चन भेदः। अतो हेतोः श्रीरामस्य सर्वाः लीलाः कृष्णपरकतयाप्यनुषञ्जनीयाः। एक एव परमात्मा रामरूपेण मर्यादां

कृष्णरूपेण च रसिकलीलां शिक्षयति। रामरूपेण योगिनो रमयति। कृष्णरूपेण परिव्राजकान् सनाथयति। सामान्यं जगत् शिक्षयन् रामरूपेण विराजते। योगिनः शिक्षयंश्च कृष्णरूपेण विराजते। अतो रामलीलाः श्रवणीयाः अनुकरणीयाश्च किन्तु कृष्णलीलाः केवलं श्रवणीयाः नानुकरणीया इत्येव तत्रत्यं तात्पर्यम्।

तस्मादत्र कृष्णलीलावर्णनोपक्रमे एव अत्रत्यपद्यानां वास्तवार्थः। शब्दबलात्कारेण प्रकामं यत्किमपि केचन कुर्वन्तु किन्तु ग्रन्थस्य हार्दं तु एतदेव। वयमपि सिद्धान्तमेव समर्थयामः। तथा हि सर्वावतारित्वं श्रीरामचन्द्रस्य सुस्पष्टम्। पूर्वमेवोक्तमस्ति—

**श्रीवल्लभं कृपानाथं जगन्मोहनमच्युतम्।**
**मत्स्यकूर्मवराहादि रूपधारिणमव्ययम्॥**

अधुना कृष्णावतारोपक्रमे कृष्णलीलानां दिग्दर्शनम्। एवं हि–वासुदेवं वसुदेवस्य अपत्यं पुमान वासुदेवः। वसुदेवो नाम सूरसेन पुत्रः। तस्यापत्यं वासुदेवः। वसुषु अष्टसु दीव्यतीति वसुदेवः नन्दः तस्याप्यपत्यं वासुदेवः तादृशं जगज्जीवनं जगज्जन्मादिकारणं अनादिनिधनं आद्यन्तरहितं हरिं सर्वचित्ता पहारकं गोविन्दं गोवर्धनधारणप्रसंगे गोविन्देति पुरन्देरेण दत्तनामानं गोपतिं गवां पातिः गोपतिः तं गोपतिं गोचारणतत्परं विष्णुं सर्वव्यापकं अनन्तरं तु गोपीजनमनोहरं गोपीजनानां मनोहरमिति दशमस्कन्धस्य पूर्वार्धलीलानां संकीर्तनम्। यथोक्तं–परिशिष्टावतारोऽयं कृष्णावतारः। श्रीरामावतारे याः लीलाः परिशिष्टाः ता एवात्र पूरिताः। इत्येव राद्धान्तोऽस्माकम्। सार्वजनीनमेतत् यत् श्री चित्रकूटे भगवता श्रीरामचन्द्रेण श्रीसीतयासह नवनवति महारासाः विहिताः। शततमे विधीयमाने रासे जयन्तेन व्यवहिते अर्धांशं गते तस्यैवार्धांशस्य वृन्दावने विहित इति सर्वविदितमेव। एवं अत्र यदि स्वरसतः कृष्णलीलानां संकीर्तनं तदा श्रीरामोपासकै र्नान्यथा गृहीतव्यम्। रामकृष्णयोरभेदस्य पूर्वमेवोक्तत्वात् उपपादितचरित्रत्वाच्च। एवं श्रीरामावतारे श्रीरामं दृष्ट्वा यावत्यो मिथिलावासिन्यो योषाः तासां मनोभावं पूरयितुं कृष्णावतारे गोपिकात्वमनुज्ञातमस्ति श्रीरामावतारे

गृहीतैकनारिव्रतत्वात् तासां मनोऽभिलाषपूरकत्वासम्भवाच्च। एवं तासां मैथिलानीनां गोपकन्यावतारोपपत्तौ ताभिः समावृतम् गोपकन्यासमावृतम्। तथाहि दण्डकारण्यमुनीनां जगन्मोहनसौन्दर्यसारसर्वस्वभूतस्य श्रीरामस्य आलिलिङ्क्षां निरूप्य तेभ्योऽपि द्वापरे गोपिकावतारस्यैव भगवतानुज्ञापितत्वात् दण्डकारण्यमुनीनामपि गोपीत्वम्। एवं अग्निकुमाराणां बालखिल्यानां अन्यासां च श्रीचित्रकूटे समागतानां श्रीरामचन्द्रं प्रति माधुर्यं कुर्वतीनां तत्रभवतीनां सुरपुरन्ध्रीणामपि द्वापरे एव मनःकामपूरकत्वसम्भवात् तासामपि गोपीत्वोक्तेश्च। तथा च दण्डकारण्यवासिनो मुनयः श्रीरामं दृष्ट्वा प्रोचुः–राम। त्वामालिङ्गाम। स होवाच–द्वापरे गोपिका भूत्वा मामालिङ्ग्थेति। दण्डकारण्यमुनीनां गोपीत्वं उपनिषदि प्रसिद्धमेव। एवं दण्डकारण्यवासिनां मुनीनां सुरपुरन्ध्रीणां मिथिलाराजकन्यानां च गोपीत्वात् गोपकन्यासमावृतमित्येव समीचीनं लगति। तथा च पुराणे–

**गोप्यश्च श्रुतयः प्रोक्ताः ऋषिजाः देवकन्यकाः।**
**गोपकन्याश्च राजेन्द्र न मानुष्यः कथञ्चन।।**

गोपीनां गोपकन्यात्वं अमानुषीत्वं पुराणेषु प्रसिद्धम्। एवम्भूताभिः गोपकन्याभिः समावृतम्। अतस्तस्य गोपीजनमनोहरत्वमपि शास्त्रतः सिद्धम्। गोभिः पिबन्तीति गोप्यः त एव जनाः गोपीजनाः तासां मनोहरम्। एवम्भूतो भगवान् यश्च वेणुवादनतत्परः भवन् तमेव सङ्केतयति। तथा च विद्युत्पुञ्जप्रतीकाशं तेजसा विद्युतपुञ्जसदृशं एवं जगन्मयं जगज्जन्मादिहेतुं कृष्णलीलापरं रामं नमामि इति तत्रत्यः फलितार्थः।

इदानीं महारासलीलां सङ्केतयति–

**गो गोपिका समाकीर्णं वेणुवादन तत्परम्।**
**कामरूपं कलावन्तं कामिनीकामदं विभुम्।।**

**रा०कृ०भा०–**अन्वयस्तु सुगमः। गावश्च गोपिकाश्च अनुकम्पिताः गोप्यः गोपिकाः याः रासलीलायां भगवतैव अनुज्ञापिताः ताभिः समाकीर्णं समावृतम्। तथा च पौराणिकाः –

**कस्तूरीतिलकं ललाटपटले वक्षस्थले कौस्तुभम्**
**नासाग्रे वरमौक्तिकं करतले वेणुं करे कंकणम्।**
**सर्वाङ्गे हरिचन्दनं सुललितं कण्ठे च मुक्तावली**
**गोपस्त्रीपरिवेष्टितो विजयते गोपालचूड़ामणिः॥**

वेणुर्नामवंशी। यश्च साक्षान्महारुद्रः भगवतैव विषं पातुमनुज्ञातः स एव भगवतोऽधरामृतं पातुं साम्प्रतं वंशत्वं गतः। अतः वंशो ज्ञेयो महारुद्रः।

शिवमेव वंशीति राद्धान्तः श्रीवैष्णवानाम्। वं ब्रह्मसुखं इ मायासुखं तौ अणू अल्पीभूतौ यस्मात् स वेणुः तस्य वादनं वेणुवादनं तस्मिन् तत्परं वेणुवादनतत्परम्। तथा चोक्तं श्रीव्रजाङ्गनाभिः दशमस्कन्धे श्रीभागवते वेणुगीत प्रसङ्गे–

**गोप्य किमाचरदयं कुशलं स्म वेणु र्दामोदराधरसुधामपि गोपिकानाम्।**
**भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्वचोऽमुमुचुस्तरवो यथार्याः॥**

एवम्भूतं वेणुवादनतत्परं कामरूपं कमनीयं रूपं यस्य तं कलावन्तं सकलकलाविशारदं कामिनीकामदम् कामिनीनां श्रीव्रजांगनानां गृहीततत्तद्भावभावनानां पुरापि भिन्नभिन्नावसरेषु गोपिकाभिः समनुज्ञापितानां ये कामाः भगवत्परिष्वङ्गानुकूलास्तान् ददातीति कामिनीकामदस्तं कामिनीकामदम्। यथा चोक्तं दशमे द्वाविंशे–

**याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः।**

इति वरप्रदत्वात्। अतएव स्वयमेव दशमे ऊनत्रिंशे गोप्यः प्राहुः–

**तन्नः प्रसीद परमेश्वर मास्म छिन्द्या**
**आशां भृतां त्वयि चिराद रविन्दनेत्र।**

एवम्भूतं प्रभुं सर्वसमर्थं अनन्तकालपर्यन्तं रासलीलाकरणत्वेऽपि अक्षतब्रह्मचर्यम्। एवम्भूतं प्रभुं श्रीकृष्णलीलाकृतं कृष्णाभिन्नं रामं नमामीत्येव अत्रत्यः स्वारसिकः पदार्थः॥श्रीः॥

**राघवकृपाभाष्य–**हम कह चुके हैं कि श्रीराम और श्रीकृष्ण में कोई

भेद नहीं है। इसलिए यहाँ सभी कृष्णावतार की लीलाएँ प्राय: संकेतित की गई हैं। और उनका यही स्वारस्य भी है। शब्दों के बलात्कार से ग्रन्थ को न्याय नहीं मिला करता। इसलिए स्वरसत: हठ छोड़कर साम्प्रदायिक दुराग्रह से मुक्त होकर भगवान् का आनन्द लेना चाहिए। जो श्रीराम हैं वही श्रीकृष्ण हैं। जैसे जो श्रीचित्रकूट में श्रीसीताराम जी का विहार है, वही तो श्रीवृन्दावन में श्रीराधाकृष्ण का विहार है। श्रीचित्रकूट की सीता और श्रीवृन्दावन की राधा दोनों में कोई अन्तर नहीं है। श्रीचित्रकूट में जो भगवान् का मन रमा और श्रीवृन्दावन में श्रीकृष्ण का इसलिए दोनों में कोई मौलिक अन्तर नहीं है। श्रीचित्रकूट में कामदेश्वर और श्रीवृन्दावन में गोवर्धन ये दोनों एक ही स्वरूप तो हैं श्रीचित्रकूट के राम और श्रीवृन्दावन के श्रीकृष्ण। इसलिए शब्दों का स्वारसिक अर्थ ही ग्रन्थ का हार्द है और वैष्णवजनों के लिए उचित भी है। इसलिए इस प्रकरण में 'मत्स्यकूर्मवराहादि रूपधारिणमव्ययम्' कहने के पश्चात् अब मुख्य अवतारों की चर्चा करते हैं। उनमें श्रीराम से सबसे अधिक निकट अवतार है श्रीकृष्ण का। इसलिए सर्वावतारी श्रीराम के कृष्णावतार की चर्चा भी तो उपयुक्त होगी। वैसे सभी अवतारों के श्रीराम अवतारी हैं। श्रीराम से ही सभी अवतार निष्पन्न होते हैं, उनके साथ सभी अवतारों की चर्चा होनी भी आवश्यक है। अत: अब कृष्णावतार की चर्चा भी करते हैं जिससे नारद जी पाँच श्लोकों में उनके जन्म से संकीर्तन करेंगे। नारद जी कहते हैं–वासुदेवम्–वसुदेव के पुत्र अथवा वसुओं में श्रेष्ठ नन्दन के नन्दन भगवान्श्रीकृष्ण, जगद्योनिम्–जगत् के उत्पत्ति विनाशादि के हेतु आदि और निधन से रहित, क्योंकि पूतनादि के नाना उपद्रवों के पश्चात् भगवान् श्रीकृष्ण जैसे यथावत् रहे, अत: अनादिनिधनम्, हरि–सबके चित्त का उन्होंने आकर्षण किया, गोविन्दं–गोवर्धनधारण के पश्चात् इन्द्र ने ही तो उनका नाम गोविन्द रखा था–

**अभ्यषिंचत दाशार्हं गोविन्द इति चाभ्यघात्।**

गोपतिं–गौओं के चराने के कारण भगवान् श्रीकृष्ण स्वयं गोपति हैं। गोपीजनमनोहरम्–गोपीनां परमानन्द आसीद् गोविन्ददर्शने गोपीजनों के

मनों को हरण करने वाले ऐसे श्रीकृष्णरूप राम का चिन्तन अभीष्ट है। गोपालं–गौओं का पालन करने वाले, गोपरिवारम्–गायें ही जिनका परिवार है। क्योंकि भगवान् श्रीकृष्ण कह चुके हैं कि गायें मेरे आगे हैं, गायें ही मेरे पीछे हों, गायें मेरे अगल बगल में, गायें मेरे सम्मुख हों, मैं गौओं के ही बीच में रहूँ। इसलिए गौएं ही उनका परिवार है। गोपकन्याओं से वे घिरे हुए हैं। ये गोपकन्याएँ सामान्य नहीं। चार प्रकार की गोपियाँ हैं–अनेक श्रुतियाँ श्रीकृष्ण भगवान का परिष्वंग प्राप्त करने के लिए गोपियाँ बन गई हैं। अनेक ऋषिगण भगवान् श्रीराम के रूप सौन्दर्य पर मोहित होकर उनके आलिङ्गन की इच्छा कर रहे थे। दण्डकारण्यवासियों की इस प्रकार मनोवृत्ति देखकर भगवान् आनन्दकन्द श्रीराम ने उन्हें द्वापर में गोपी बनने के लिए आदिष्ट किया था। यह प्रकरण श्रीरामतापनीयोपनिषद् में भी कहा गया है। और अनेक मिथिलानगरनिवासिनी नारियाँ भी भगवान् श्रीराम के सौन्दर्य पर मोहित हो चुकी थीं। उस समय एकनारीव्रत का पालन करने के कारण उनकी मनोभावनाओं को पूर्ण करना सम्भव नहीं था, इसलिए भगवान् श्रीराम ने उन्हें भी द्वापर में गोपिका बनने का आदेश दे दिया था। इसी प्रकार अनेक बालखिल्यगण, अग्निकुमार और देवताओं की स्त्रियाँ, जो श्रीचित्रकूट में कोटितीर्थ और देवांगना में आकर भगवान् श्रीराम के निन्यानवें रासों में सम्मिलित हुईं थीं, जिन्हें वे सीताजी के साथ कर रहे थे, अब सौवाँ रास जब जयन्त के साथ विघ्नित अर्थात् व्यवहित हुआ था तब भगवान् श्रीराम ने वहीं रासलीला समाप्त की थी और उसी का अर्धांश श्रीवृन्दावन में पूर्ण किया। यह कथा आप जानते हैं। श्रीकृष्णावतार भगवान् की परिशिष्ट लीलाओं का ही तो अवतार है। जो लीलाएँ श्रीरामावतार में सम्भव नहीं हो पाईं वही कृष्णावतार में सम्पन्न की गईं। इसलिए दोनों में किसी प्रकार के भेद की शंका ही नहीं करनी चाहिए। ऐसी गोपियाँ जो मनुष्य भाव से सर्वथा ऊपर हैं, उनके हावभाव में कभी मानवीय मान्यताओं का समारोपण नहीं करना चाहिए। यह पक्ष मानव की परिधि से बहुत ऊपर का है। क्योंकि भगवान् श्रीकृष्णचन्द्र स्वयं एक ऐसे व्यक्तित्व हैं जो इन्द्रिय, विषय, मन, बुद्धि, आत्मा और प्रकृति इन सबसे ऊपर अद्वितीय

चिन्मयानन्दस्वरूप हैं इसलिए वहाँ मानव की वासना का समारोपण सर्वथा अन्याय है। इस प्रकार गोपकन्याओं से भगवान् श्रीकृष्ण समाकीर्ण हैं, विद्युत्पुंज के समान वे परम तेजोमय हैं। ऐसे जगन्मय श्रीकृष्णरूप श्रीराम को मैं नमन करता हूँ। यही इस प्रसंग का वास्तविक अर्थ है।

अब महारास के वर्णन का प्रारम्भ करते हैं—

गोपिकासमाकीणम्–जो गौओं और गोपिकाओं से समाकीर्ण हैं अर्थात् गौ और गोपिकाएँ, इन्द्रियाँ और उनके रस के पीने वाले परम भागवत जन ये उन्हें छोड़ते ही नहीं। स्त्रीत्वं तेषु प्रतिष्ठितम्–भजन रसिक का मन स्त्री जैसा होता है, जब तक पूर्ण समर्पण नहीं होता तब कि भजन में आनन्द ही नहीं आता। इसलिए परमहंसपरिव्राजकाचार्य भी गोपी बनते हैं और गोपीभाव में आकर ही भगवान् श्रीकष्ण की सेवा करते हैं। वेणुवादन तत्परम्–भगवान शंकर ही वंशी बन गए हैं। व्युत्पत्ति के आधार पर कहा जाता है कि 'व' का अर्थ है ब्रह्मसुख, 'इ' का अर्थ है मायासुख, ये दोनों ही जहाँ अणु हो जाते हैं, उसे वेणु कहते हैं। ऐसे वेणु के वादन में भगवान् श्रीकृष्ण तत्पर हैं। वेणुगीत में स्वयं गोपियाँ कहती हैं–हे गोपियो! वेणु ने कौन सा तप किया है जो गोपियों के लिए अधिकृत दामोदर श्रीकृष्ण की अधर सुधा का पान कर रही है। सब तो चरणामृत पीते हैं, परन्तु यह वेणु अधरामृत पी रही है। जो धरा में प्राप्त नहीं हो सकता। जो राधाजी के अधर से सम्पृक्त हो चुका है, ऐसे अमृत का पान वेणु करती है। इससे उसके वादन में भगवान् श्रीकृष्ण तत्पर हैं। कामरूपम्–उनका रूप अत्यन्त कमनीय है, जो गोपीजनों के द्वारा चाहा गयाहै। अनन्तकाल से जिसके लिए कोटि-कोटि परमहंस परिव्राजकों ने उग्र तपस्याएँ की हैं, और कामरूपम् का अर्थ यह भी है यथेच्छरूप धारण किया है, अनन्तकालपर्यन्त रास करने पर भी इसमें कोई परिवर्तन नहीं आयेगा। वे निरन्तर किशोररूप में ही रहेंगे और गोपियाँ भी उसी अवस्था में रहेंगी। कामिनीकामदम्–कामिनियों ने कामनाएँ की हैं अनन्तकाल तक भगवान् के स्पर्श के लिए। वास्तव में यहाँ काम का अर्थ दूसरा नहीं समझना चाहिए। भगवान् का स्पर्श ही भगवान् का अंगसंग ही उनकी कामना है। और उन कामनाओं को भगवान यहाँ

पूर्ण कर रहे हैं। अथवा कामिनियों के मन में जो संसार की कामनाएँ हैं, उनको भगवान समाप्त कर रहे हैं–कामिनीनां कामान् द्यति इति कामिनीकामदः तं कामिनीकामदम्। ऐसे सर्वसमर्थ भगवान् को मैं प्रणाम करता हूँ।

वस्तुतस्तु प्रेमैव गोपरामाणां काम इत्यगमत्प्रथाम् इति सिद्धान्तात्। गोपियों का प्रेम ही यहाँ काम शब्द से व्यवहृत हुआ है। गोपियाँ बार–बार कह चुकी हैं–

**तन्नः प्रसीद व्रजिनार्दन तेऽङ्घ्रिमूलं प्राप्ता विसृज्य वसतीस्त्वदुपासनाशाः।**
**त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मनां पुरुषभूषण देहि दास्यम्।।**

हे पापहारी प्रभो हम पर प्रसन्न होइये। आपकी उपासना की आशा से हम घर द्वार छोड़कर आपके श्रीचरणों में आए हैं। अथवा–आपकी उपासना को भक्षण करने वाली गृहस्थी को हमने छोड़ दिया है। आपके सुन्दर, निरीक्षण, मन्द मुस्कान से उत्पन्न हुए तीव्र काम, उत्कट प्रेम से तप्त अन्तःकारणवाली हम लोगों को आप दास्य का सौभाग्य दीजिए, सेवा का सौभाग्य दीजिए। यदि संसार का काम होता है तो वहाँ भोग की याचना की जाती है। किन्तु गोपियाँ दास्य की याचना कर रही हैं। दासी बनना चाह रही हैं। इसलिए यहाँ संसारी काम की कल्पना नहीं करनी चाहिए॥श्री॥

इदानीं अग्रिमलीलानां सङ्केतः –

❁ **मन्मथं मथुरानाथं माधवं मकरध्वजम्।**
**श्रीधरं श्रीकरं श्रीशं श्रीनिवासं परात्परम्।।३८।।**

**रा०कृ०भा०**–मन्मथं–मनांसि मथ्नाति इति मन्मथः तादृशम् मन्मथम्। यथोक्तं श्रीभागवते–

**तासामाविरभूच्छौरिः स्मयमान मुखाम्बुजः।**
**पीताम्बरधरः स्रग्वी साक्षान्मन्मथमन्मथः।।**

एवम्भूतं मन्मथं कृतमहारासं, मथुरानाथं कंसं निहत्य कथुरां नाथते इति मथुरानाथस्तं मथुरानाथम् मथुराधीशम्। माधवं मधुवंशजानां हितकरम्, मधूनामयं माधवः, यद्वा मायाः लक्ष्म्याः धवः माधवः, यद्वा मायायाःधवः

माधवः तं माधवम् पृषोदरादित्वात् यकार लोपः। द्वारकाधीशं मकरध्वजम् मकरध्वजा साक्षात्कामरूपौ प्रद्युम्नजनकत्वात्। यद्वा मम् जीवं करोति निजकिङ्करम् इति मकरः स एव ध्वजोयस्य स मकरध्वजः तादृशं मकरध्वजम्। श्रीधरं श्रियं धरतीति श्रीधरः इत्यनेन रुक्मिण्यापि दीनां अष्टोत्तरशत षोडशसहस्रवल्लभमानां सङ्केतः, श्रीकरं-श्रियं करोतीति श्रीकरः तं श्रीकरम् अनन्तलक्ष्मी सम्पन्न द्वारकाधीशं श्रीशं श्रियाः लक्ष्म्याः ईशं श्रीनिवासम् श्रियाः लक्ष्म्याः निवासः यस्मिन् सः श्रीनिवासः तं श्रीनिवासम्, परात्परम् परो–बुद्धे परोजीवात्मा, जीवात्मनोऽपि परीभूतं परामात्यतत्त्वरूपं साक्षात् श्रीकृष्णचन्द्ररूपं श्रीरामं अहं नमामि॥श्रीः॥

**राघवकृपाभाष्य**—अब कृष्णावतार की अग्रिम लीला का सङ्केत करते हैं—

गोपियों के मन को मथ देने वाले उनके चित्त के आकर्षक, साक्षान्मन्मथमन्मथ एवं कंस को मारकर मथुरा को सनाथ करनेवाले मथुरानाथ, मधुवंशियों के साक्षात् शाश्वत सम्बन्धी, मा अर्थात् लक्ष्मी के पति अथवा माया के पति ऐसे माधव, मकरध्वज साक्षात्कामरूप, प्रद्युम्न के पिता, श्री रुक्मिणी जैसी अनन्तसौन्दर्यसम्पन्न गृहलक्ष्मी को धारण करने वाले, श्रीकरम्–भक्तों के जीवन में लक्ष्मी को लाने वाले, श्रीराम–श्री के पति और सोलह हजार एक सौ आठ पत्नियों को आनन्दित करने वाले ऐसे श्री के निवास द्वारकाधीश एवं अनन्तलक्ष्मी के भी निवासभूत, जीवात्मा से भी परे परमेश्वर परमात्मा श्रीकृष्ण श्रीराम को मैं नमस्कार करता हूँ।

भगवान श्रीकृष्ण मन्मथ हैं। पहले ही कह चुके हैं कि गोपीजनों के समक्ष वे साक्षात् मन्मथमन्मथ होकर ही प्रकट हुए थे। कंस को मारकर वे मथुरानाथ बने और मधुवंशियों का पालन किया। मा अर्थात् लक्ष्मी के पति होने से अथवा माया पर नियन्त्रण करने से उन्हें माधव कहा जाता है। यहाँ 'पृषोदरादित्वात्' यकार का लोप माना जाता है। वे मकरध्वज, प्रद्युम्न को उत्पन्न करने के कारण साक्षात् कामरूप हैं और श्रीधर रुक्मिणी जी को उन्होंने स्वीकारा है इसलिए उन्हें श्रीधर कहते हैं। भक्तों को भी उन्होंने

लक्ष्मीसम्पन्न किया, सुदामा आदि परमभागवत उनके चरणों से धनधान्य सम्पन्न हुए। स्वयं वे सोलह हजार एक सौ आठ पत्नियों के वल्लभ होने के कारण श्रीश हैं, लक्ष्मी उनकी दासी हैं और अनन्तश्रीसम्पन्न द्वारकाधीश होने के कारण श्री लक्ष्मीजी का उनमें ही निवास है। जीवात्मा सबसे परे है, उससे भी परे वे परमात्मतत्त्व हैं इससे परात्पर हैं। यहाँ 'पूर्वादिभ्योनवभ्यो वा' इस सूत्र से विकल्प से 'स्मात्' आदेश होने के कारण अभाव पक्ष में परात्पर शब्द का प्रयोग हुआ है। ऐसे श्रीकृष्णस्वरूप भगवान् श्रीराम को मैं प्रणाम करता हूँ॥श्री॥


**भूतेशं भूपतिं भद्रं विभूतिं भूतिभूषणम।**
**सर्वदुःखहरं वीरं दुष्टदानव वैरिणम्॥३९॥**

**रा०कृ०भा०–**भूतानां प्राणिनामीशं साक्षात् सर्वजगन्नियन्तारं भुवः पतिः भूपतिः तं भूपतिं महाराजं राजाधिराजं, भद्रं भवन् रमयति इति भद्रः इति यास्कः एवं सकलकल्याणगुणगणमयं, विशिष्टा भूतयः यस्य स विभूतिः, यद्वा विः विष्णुः तस्मै अभिभूतिः पालकसामर्थ्यं यस्मात् स विभूतिस्तं विभूतिम्। भूतिभूषणम्–भूतिमान् भगवान् शंकरः तं भूषयतीति भूतिभूषणः तं भूतिभूषणम् 'विनापि प्रत्ययं पूर्वोत्तरपदलोपो वक्तव्यः' इत्यनेन मतुब्लोपः। साक्षात् शिवस्य आभूषणम्, सर्वदुःखहरं–सर्वाणि दुःखानि हरतीति सर्वदुःखहरः तं सर्वदुःखहरम् वीरं–विशेषेण ईरयतीति वीरः तं वीरम्, दुष्टाः ये दानवाः विप्रचित्यादयः तेषां वैरी दुष्टदानववैरी तं दुष्टदानवैरिणम् दुष्टशब्दप्रयोगात् सतां दानवानां प्रह्लादिनां मित्रं इत्येव सूच्यते। एवम्भूतं श्रीरामं अहं प्रणमामि॥श्री॥

**राघवकृपाभाष्य–**जो सम्पूर्ण भूत प्राणियों के ईश अर्थात् ईश्वर हैं, जो पृथ्वी के स्वामी राजाधिराज महाराज हैं, जिनमें सभी विशिष्ट विभूतियाँ विराजती हैं अथवा विष्णु को भी जिनसे भूति अर्थात् पालन का सामर्थ्य मिला है, जो भूतिधारी भस्मांगराग लेप करने वाले भगवान् शंकर के भी आभूषण हैं अर्थात् भगवान् शंकर भी जिन्हें अपने हृदय में विराजमान करते हैं, जो भक्तों के सम्पूर्ण दुःखों को हरने वाले हैं, जो वीर हैं, जो दुष्ट दानवों विप्रचित्ति आदि के वैरी हैं, ऐसे परमात्मा श्रीराम को मैं प्रणाम

करता हूँ॥श्री॥

यहाँ 'दुष्टदानववैरिणम्' का तात्पर्य यह है कि भगवान् सन्त दानवों के वैरी नहीं है। सन्तदानव प्रह्लाद आदि तो उनके परम भक्त ही हैं॥श्री॥


**श्रीनृसिंहं महाबाहुं महान्तं दीप्ततेजसम्।**
**चिदानन्दमयं नित्यं प्रणवं ज्योतिरूपिणम्॥४०॥**

**रा०कृ०भा०**–श्रीनृसिंह श्रियासहितो नृसिंहः श्रीनृसिंहः, ना एव सिंहः नृसिंहः, ना चासौ सिंहः नृसिंहस्तं नृसिंहम् श्रीनृसिंहावताररूपम् महाबाहुं बाधेते इति बाहू महान्तौ बाहू यस्य तथाभूतम्, महान्तम् कर्ममहिममंडितम्, दीप्ततेजसम्–दीप्तं तेजं यस्य स दीप्ततेजास्तं दीप्ततेजसम् कोटिकोटि सूर्यप्रकाशम्, चिदानन्दमयम्–चिदानन्द एव चिदानन्दमयस्तं चिदानन्दमयम् 'स्वरूपे मयट्', नित्यं–विनाशरहितम्, प्रणवं ओंकारस्वरूपम्, ज्योति–रूपिणम्–ज्योतिर्मयं साक्षात्। इह पृषोदरादित्वात् षकार लोपः, यद्वा ज्योतिशब्दः इकारान्तोऽपि। 'सर्वे सान्ता अजन्ताः' इति वैयाकरण राद्धान्तात्। एवम्भूतं सकलज्योतिस्वरूपं परमात्मानं श्रीराममहं प्रणमामि॥श्रीः॥

**राघवकृपाभाष्य**–श्रीनृसिंह अर्थात् शोभासम्पन्न जो साक्षात् नृसिंहरूप हैं, अथवा नरों में जो सिंह के समान हैं, जिनकी भुजाएँ महान् हैं, जो स्वयं भी महान् और जिनका तेज अत्यन्त दीप्त है, ऐसे साक्षात् ज्ञान एवं आनन्दस्वरूप नित्य ओंकाररूप उन ज्योतिर्मय परमात्मा श्रीराम को मैं प्रणाम करता हूँ॥श्री॥


**आदित्यमण्डलगतं निश्चितार्थस्वरूपपिणम्।**
**भक्तिप्रियं पद्मनेत्रं भक्तानामीप्सितप्रदम्॥४१॥**

**रा०कृ०भा०**–आदित्यमण्डलगतं–अदितेः अपत्यं पुमान् आदित्यः 'दित्य दित्यादित्य पत्युत्तरपदाण्यः' इत्यनेन ण्य प्रत्ययः। आदित्यः सूर्यस्तस्य मण्डलम् आदित्यमण्डलम् तद् गतं इति आदित्यमण्डलगतम्। निश्चितः निश्चय–विषयीकृतः अर्थः भगवत्कैंकर्यरूपः प्रयोजनविशेषः येषां ते निश्चितार्थाः भगवत्कैंकर्ये कृतनिश्चयाः त एव स्वरूपाणि साक्षात् आत्मस्वरूपाणि इति निश्चितार्थस्वरूपाणि तानि सन्त्यस्मिन् इति निश्चितार्थस्वरूपी तं निश्चितार्थ

स्वरूपिणं अथवा निश्चितः अर्थः भगवत्कैंकर्यरूपः यस्मिन् तत् निश्चितार्थम् निश्चितार्थं स्वरूपं दासभूतं येषां ते निश्चितार्थस्वरूपाः श्रीवैष्णवाः ते सन्त्यस्मिन् वा तथाभूतम्, भक्तिः प्रिया यस्य सः भक्तिप्रियस्तं भक्तिप्रियम्, पद्मनेत्र–कमलनयनम् भक्तानामीप्सितप्रदम् मनोवाञ्छितदातारं तादृशं रघूत्तमं राममहं प्रणमामि।

**विशेषः** –अत्र भूतेशमित्यारभ्य ईप्सितप्रदं इत्येतदन्तेन श्लोकत्रयेण भगवतः श्रीरामस्य श्रीसाकेतविहारिणः ऐश्वर्यं वर्णितम्। किञ्च एकविंशत्या विशेषणैः भगवतः श्रीरामस्य एकविंशतिगुणा अपि कथिताः यद्वा–अत्र एकैकेन श्लोकेन भगवतः क्रमशः सन्धानी, संविद, आह्लादिनी इति शक्तित्रयमपि वर्णितम्॥श्रीः॥

**राघवकृपाभाष्य**–जो सूर्यमण्डल में विराजमान हैं और भगवत्कैंकर्य ही जिनका निश्चित प्रयोजन है, ऐसे परमवैष्णवजनों को अपना स्वरूप बनाकर जिन्होंने अपने हृदय में बसाया है अर्थात् अपने हृदय में विराजमान कराया है, यानी भगवत्सेवा का जिनका निश्चय है ऐसे परमहंस परिव्राजकों को जो अपने हृदय में तथा अपने समीप विराजमान कराते हैं, भक्ति जिन्हें प्रिय है, जिनके नेत्र कमल के समान हैं, जो भक्तों को मनोवाञ्छित कामनाएँ प्रदान करने वाले हैं, ऐसे भगवान् राघवेन्द्र सरकार श्रीराम को मैं प्रणाम करता हूँ।

**विशेष**–यहाँ ३९वें श्लोक से लेकर ४१वें श्लोकपर्यन्त ३ श्लोकों में भगवान् साकेतविहारी सर्वावतारी श्रीराम की ऐश्वर्यलीला का वर्णन किया गया है क्योंकि भगवान् श्रीराम ही सभी प्राणियों के ईश्वर, सप्तद्वीपा वसुन्धरा के शासक, सकलकल्याण गुणगणों से युक्त, चतुष्पाद विभूति के नायक, विशिष्टविभूतिमती सीताजी के भी आभूषण, सम्पूर्ण दुःखों के हर्ता, एकमात्र वीर, दुष्टदानवों के निग्रहकर्ता, नरों में श्रेष्ठ, अजानुबाहु, सबसे महान्, परमतेजस्वी, ज्ञान एवं आनन्दस्वरूप, अविनाशी, साक्षात् ओंकारूप, दिव्यज्योतिर्मय, सूर्यमण्डल में विराजमान, प्रपन्न श्रीवैष्णवों को सामीप्य मुक्ति देने वाले, भक्ति के वशीभूत, कमलनेत्र तथा भक्तों को मनोवाञ्छित कामनाएँ प्रदान करने वाले हैं।

यहाँ २१ विशेषणों से प्रभु श्रीराम के २१ गुणों का वर्णन किया गया है, जो दश इन्द्रियाँ, चार अन्तकरण, पंचप्राण तथा बुद्धि और जीवात्मा के लिए भी ध्येय एवं गेय हैं। इन्हीं तीन श्लोकों से क्रमशः भगवान की संधानी, संविद एवं आह्लादिनी शक्ति का भी संकीर्तन किया गया है॥श्री॥

अथ पंचभिः श्लोकैः भगवतो राघवस्य माधुर्यलीलां वर्णयति–



**कौसल्येयं कलामूर्तिं काकुत्स्थं कमलाप्रियम्।**
**सिंहासने समासीनं नित्यव्रतमकल्मषम्॥४२॥**

**रा०कृ०भा०–**कौसल्यायाः अपत्यं पुमान् कौसल्येयः तम् कौसल्यासूनुमिति भावः कलामूर्तिं कलाः एव मूर्तौ यस्य सः कलामूर्तिः, कलानां मूर्तिः कलामूर्तिः, अथवा मूर्च्छामूर्तिः कलानां विधातुः सृष्टिचातुरी मण्डितानां मूर्तिः मूर्च्छा यस्मात् सः कलामूर्तिस्तं कलामूर्तिम् यं दृष्ट्वा विधातुः सृष्टि निर्माणचातुरी कला अपि मूर्च्छन्ति एवम्भूतं सकलसौन्दर्यनिधिं काकुत्स्थं कुकुत्स्थवंशोद्भवं, कमलाप्रियं कमलायाः राजलक्ष्म्याः प्रियं कमलाप्रियम् यद्वा कमलाविहारिणी सीताप्रिया यस्य तं एवम्भूतं सिंहासने भौमसाकेते सिंहासने समासीनं नित्यव्रतम् नित्यं भक्तरक्षणरूपं व्रतं यस्य तादृशं नित्यव्रतम्, अकल्मषं–कल्मषरहितं भौमसाकेतविहारिणं श्रीहरिं महाविष्णुं सर्वावतारिणं श्रीराममहं प्रणमामि॥श्रीः॥

**राघवकृपाभाष्य–**जो कौसल्याके पुत्र हैं और समस्त कलाएँ ही जिनके श्रीविग्रह में विराजती हैं अथवा जो स्वयं कलाओं की मूर्ति हैं, अथवा जिन्हें देखकर ब्रह्मा की सृष्टि रचनाचातुरीयुक्त कलाएँ भी मूर्च्छित हो जाती हैं, फीकी पड़ जाती हैं, निष्क्रिय हो जाती हैं अर्थात् भगवान् के सान्दर्य को देखकर जहाँ ब्रह्मा भी लज्जित हो जाते हैं, ऐसे कलामूर्ति काकुत्स्थ के वंश में उत्पन्न और कमलाप्रिय अर्थात् कमलाविहारिणी सीता जिन्हें प्रिय हैं, जो भौमसाकेत में निरन्तर दिव्य सिंहासन पर विराजमान रहते हैं, भक्तों का रक्षण ही जिनका नित्यव्रत है और जो समस्त दोषों से बहिर्भूत हैं अर्थात् समस्त हेयगुण जिनसे निरस्त हो चुके हैं, जिनसे दूर हो चुके हैं, जिन्होंने हेयुणों को स्पर्श भी नहीं किया है, ऐसे निरस्तसमस्तहेयगुणप्रत्यनीक समस्त

निरुपद्रवनिरतिशय, निरुपधि, निर्दोष, कल्याणगुणगणैक निलय परमात्मा श्रीराम को मैं प्रणाम करता हूँ।।श्री।।



**विश्वामित्रप्रियं दान्तं स्वदारनियतव्रतम्।**
**यज्ञेशं यज्ञपुरुषं यज्ञपालनतत्परम्।।४३।।**

**रा०कृ०भा०**–विश्वामित्रस्य प्रियः विश्वामित्रप्रियः अथवा विश्वामित्रः प्रियः यस्य तथाभूतं दान्तं संयमशीलं दमनशीलं अहल्यापापतापशापदमनं च, स्वदारनियतव्रतम्–स्वदाराः सीता तेषु स्वदारेषु सीताख्येषु नियतं निश्चितं व्रतं यस्य स स्वदारनियतव्रतः तम्, मिथिलापुरेऽपि गत्वा सीतां विहाय नान्यासु भगवतो मनः प्रवृत्तिदर्शनात्। यज्ञेशं यज्ञानां ईशं यज्ञेशम्, यज्ञपुरुषं यज्ञमयं पुरुषं अथवा यज्ञात् जातं पुरुषं, यज्ञपालनतत्परम्–विश्वामित्रस्य यज्ञपालने, जनकस्य च धनुर्यज्ञपालने तत्परम् एवम्भूतं भगवन्तं श्रीरामं नमामीति पदार्थः। इह स्वदारनियतव्रतमित्यनेन भगवतः एकपत्नीव्रतत्वं ध्वन्यते। यत्तु केचन भगवन्तं श्रीरामं निजकल्पितमान्यतानुसारं बहुपत्नीकं साधयन्ति ते निश्चितमनर्गलमाचरन्ति।

**एकपत्नी व्रतधरो राजर्षिचरितः शुचिः।**
**स्वधर्मगृहमेधीयं शिक्षयन् स्वयमाचरत्।। भागवत ९/१०/५५**

इत्यादिशास्त्रविरोधात् 'सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्याम्'

इत्यादिवचनविरोधाच्च भगवतः श्रीरामस्य सर्वथैवैकनारिव्रतस्य प्रसिद्धेश्च। यत्तु वाल्मीकीयरामायणे अन्यत्रापि च भगवत्पत्नीविषयक बहुवचनदर्शनात् केचन शंकन्ते तदप्यनर्गलम्। यतो हि यत्र यत्रापि भगवन्नारिविषये बहुवचप्रयोगस्तत्र आदरार्थे सीतायाः कृते परमादरातिशयात् महर्षेः। अतएव भगवतः एकनारिव्रतत्वं निर्बाधम्। तस्मात् स्वदाराः सीताख्याः तेषु नियतं व्रत यस्य। यत्तु दारशब्दस्य बहुवचनप्रयोगात् केचन भगवति बहुपत्नीत्वं शङ्कन्ते तत्तु अनधीतव्याकरणमलीमसमानस विजल्पितत्वमेव मत्वोपेक्षणीयम्। दारशब्दस्य बहुव्यक्त्यभावेऽपि बहुवचनस्वभावात् मैथिलीदाराः इतिवत्। एवम्भूतं यज्ञेशं यज्ञस्वामिनं यज्ञाज्जातं पुरुषं यज्ञयोः विश्वामित्रजनकयज्ञयोः पालनतत्परं श्रीरामं प्रणमामि।।श्रीः।।

**राघवकृपाभाष्य**–विश्वामित्र जिनके प्रिय हैं और जो विश्वामित्र के प्रिय हैं, जो दान्त अर्थात् इन्द्रियों का दमन कर चुके हैं, स्वदार अर्थात् अपनी पत्नी सीताजी में ही जिनका व्रत नियत है, यज्ञों के ईश्वर, यज्ञपुरुष और विश्वामित्र तथा जनक के यज्ञों के पालन में तत्पर ऐसे मर्यादापुरुषोत्तम प्रभु श्रीराम को मैं प्रणाम करता हूँ।

यहाँ भगवान की दिव्यलीलाओं का संकेत है। स्वदारनियतव्रतम् शब्द में प्रयुक्त दार शब्द को बहुवचनान्त देखकर कुछ लोगों को ऐसी शङ्का होती है कि भगवान् श्रीराम बहुपत्नीक होंगे। पर यह उनकी थोपी हुई मान्यता का ही दुष्परिणाम है। भगवान् श्रीराम तो एकपत्नीव्रत ही हैं। भागवत के वचन–

**एकपत्नीव्रतधरो राजर्षिचरितः शुचिः।**
**स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरत्। भाग० ९–१०–५५**

भगवान् शुकाचार्य कहते हैं कि भगवान् श्रीराम ने पूर्ण अवतारकालपर्यन्त एकपत्नीव्रत निभाया एवं उनका चरित्र राजर्षियों जैसा पवित्र रहा। उन्होंने स्वयं भी सभी प्रकार की पवित्रताओं का पालन करते हुए गृहस्थोचित धर्म की सभी लोगों को शिक्षा देते हुए सदैव आचरण में उतारा।

'सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्याम्' इत्यादि महाकवियों के वचन भी विरुद्ध हो जायेंगे, इसलिए वहाँ दार शब्द को बहुवचनान्त देखकर भगवान् श्रीराम में बहुपत्नीत्व का आरोप नहीं करना चाहिए। क्योंकि वह तो बहुत व्यक्तियों के अभाव में भी उसका बहुवचन स्वाभाविक है। जैसे प्राण, दार इत्यादि शब्द स्वभावतः बहुवचन हैं। जैसे 'कलत्र' शब्द नपुंसकलिंग होने पर भी स्त्री का वाचक है इसलिए लिङ्गवचन के आधार पर बहुवचन-एकवचन की कल्पना करना यह केवल व्याकरण के अध्ययन के अभाव का ही दुष्परिणाम हो सकता है। स्वदार सीता में उनका व्रत नियत है और उनके एकनारीव्रत की शास्त्रों, स्मृतियों, पुराणों और श्रुतियों में प्रसिद्धि भी है इसलिए भगवान् राम में बहुपत्नीत्व का आरोप नहीं लगाना

चाहिए। और उपासना की दृष्टि से भी उनमें कान्ताभाव कभी भी जीव का सम्भव नहीं है। वह मर्यादा विरुद्ध है। हाँ मधुरभाव अनुनोदित है। सीताजी की सखीभाव से उपासना की जा सकती है पर कोई भी जीव भगवान् राम की पत्नी बनकर उनकी उपासना करे, यह सर्वथा शास्त्र के विरुद्ध है। ऐसे प्रभु श्रीराम जो यज्ञों के ईश्वर हैं और यज्ञपुरुष अर्थात् यज्ञ से ही उनका प्रकट्य हुआ है। और विश्वामित्र तथा जनक इन दोनों के यज्ञों की भगवान् श्रीराम ने रक्षा की है, ऐसे श्रीराम को मैं प्रणाम करता हूँ।।श्री।।



**सत्यसन्धं जितक्रोधं शरणागतवत्सलम्।**
**सर्वक्लेशापहरणं विभीषणवरप्रदम्।।४४।।**

**रा०कृ०भा०**–सत्यसन्धं–सन्धा प्रतिज्ञा, सत्या सन्धा प्रतिज्ञा यस्यः सः सत्यसन्धस्तं सत्यसन्धम् अथवा सत्यं सन्धत्ते प्रतिजानीते इति सत्यसन्धस्तं सत्यसन्धम्, जितः क्रोधः येन सः जितक्रोधः तं जितक्रोधम् शंकरस्तु जितकामः किन्तु भगवान् रामः जितक्रोधः इत्येव विशेषः। कामं विजित्यापि शंकरः क्रोधं जेतु नापारयत् किन्तु भगवान् श्रीरामः क्रोधमपि जेतुमपारयत् इत्येव तदीयं वैशिष्ट्यम्। शरणागतानां वत्सलं, शरणागतानां दोषभोक्तारं दोषोपेक्षकं वा इति शरणागतवत्सलम्। सुग्रीवादीनां दोषोपेक्षकत्वदर्शनात्। सर्वक्लेशापहरणं सर्वेषां क्लेशानां अपहरणं यस्मात् सः सर्वकलेशापहरणस्तं सर्वक्लेशापहरणम् सर्वेषां भक्तानां क्लेशान् अपहरतीतिवा सर्वक्लेशाप–हरणस्तं सर्वक्लेशापहरणम् विभीषणाय वरप्रदं कल्पान्तायुष्यप्रदातारम्–

**अभिषिच्य च लंकायां राक्षसेन्द्रं विभीषणम्।**
**कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह।**

एवम्भूतं भगवन्तं श्रीरामं अहं प्रणमामि।।श्रीः।।

जो सत्यसन्ध हैं अर्थात् जिनकी प्रतिज्ञा सत्य है और इसी आधार पर उन्होंने पिता को सत्यवादी सिद्ध करने के लिए अपना प्राप्त राज्य भी छोड़ा और बनवास की यात्रा की। जिन्होंने क्रोध को जीत लिया है, जो शरणागतों के वत्सल हैं, जो सबके क्लेशों के अपहारक हैं और विभीषण को मनोवाञ्छित वर देने वाले हैं ऐसे मर्यादापुरुषोत्तम भगवान् श्रीराम की

मैं प्रणाम करता हूँ।

भगवान् श्रीराम को गोस्वामी जी ने भी बार-बार सत्यसन्ध कहा है—

**जो नहिं फिरैं धीर द्वौ भाई**
**सत्यसन्ध जिमिव्रत रघुराई।।**
**सत्यसन्ध प्रभु सुरहित कारी**
**सत्यसन्ध प्रभु बध कर एही।**
**सत्यसन्ध छाडहु, सर लच्छा।**

उनकी प्रतिज्ञा सत्य होती है। दोनों लीलाओं में एक ही अन्तर है—श्रीरामावतार में भगवान् की प्रतिज्ञा में प्रामाण्य है और श्रीकृष्णावतार में भक्त की प्रतिज्ञा में प्रामाण्य है भगवान् की प्रतिज्ञा में नहीं। श्रीरामावतार में भगवान् अपनी प्रतिज्ञा नहीं छोड़ते। वे वाल्मीकीय रामायण में भरत जी को समझाते हुए स्पष्ट करते हैं—

**लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत्।**
**अतीयात् सागरो बेलां न प्रतिज्ञामहं पितुः।।**

अर्थात् लक्ष्मी चन्द्रमा को छोड़ सकती है, चाहे हिमालय हिम को छोड़ दे चाहे समुद्र अपनी बेला का अतिक्रमण कर जाये पर पिता के सामने की हुई प्रतिज्ञा का मैं अतिक्रमण नहीं कर सकता।

**रामो द्विर्नाभिभाषते।**

राम दो बार नहीं बोला करता। उन्होंने क्रोध को जीता है अतः उन्हें जितक्रोध कहते हैं।

**'आत्मवान् को जितक्रोधः'।**

शंकर भगवान् ने काम को जीता है पर क्रोध को वे नहीं जीत पाए। देवताओं के कहने पर भी क्रोध का संवरण उनसे नहीं हुआ और कालिदास ने स्पष्ट कहा—

**क्रोधं प्रभो संहर संहरेति यावद् गिरः खे मरुतां चरन्ति।**
**तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनञ्चकार।।**

'हे प्रभो। अपने क्रोध को समेट लीजिए, समेट लीजिए' इस प्रकार जब तक देवताओं की वाणी उच्चरित हुई, तब तक तो भगवान् शंङ्कर के नेत्र से उत्पन्न हुई क्रोधाग्नि ने कामदेव को भस्मावशेष अर्थात् जलाकर खाक कर दिया। किन्तु भगवान् श्रीराम ने क्रोध को जीता है। क्रोध उनकी इच्छा से प्रस्तुत होता है। क्रोध उनपर प्रभावी नहीं हो सकता, वे क्रोध पर प्रभावित होते हैं। जैसे–सुग्रीव पर क्रोध किया पर नियन्त्रण रखा–

**जेहि सायक मारा मैं बाली। तेहिं सर हतौं मूढ कहँ काली।**

एक बार थोड़ा सा क्रोध आया पर क्रोध पर भगवान् ने विजय पाई और तुरन्त लक्ष्मण से कह दिया–

**तब अनुजहि समुझायो रघुपति करुना सींव।**
**भय दिखाय लै आवहु तात सखा सुग्रीव।।**

अये लक्ष्मण! सुग्रीव मेरे मित्र हैं वे बध योग्य नहीं हैं, उन्हें केवल डराकर ले आओ। भगवान् शरणागतवत्सल हैं शरणागतों के दोषों की वे उपेक्षा करते हैं, शरणागतों का दोष नहीं देखते, उनके गुण ही देखते हैं। जिन्हें उन्होंने अपना लिया, उन्हें धन्य ही बना डाला। उनके दोष देखे ही नहीं–

**देखि दोष कबहु न उर आने।**
**सुनि गुन साधु समाज बखाने।।**

भगवन् सभी के क्लेशों के हरने वाले हैं इसीलिए जटायु, शबरी, कोल भील, किरात आदि परम भागवतों के क्लेशों को भगवान् श्रीराम ने समाप्त किया, विभीषण को अभीप्सित वरदान दिया और कहा भी–

**करेहु कल्पभरि राज तुम मोहि सुमिरेहु मन माहिं।**
**पुनि मम धाम जाइहौ जहाँ सन्त सब जाहिं।।मानस ६–११६–४**

एक कल्पपर्यन्त तुम राज्य करो, मेरा स्मरण करते रहना, कल्पपर्यन्त राज्य करने के पश्चात् फिर मेरे उसी धाम को प्राप्त करेगे, जहाँ सब सन्त जाते हैं।।श्री।।


**दशग्रीवहरं रौद्रं केशवं केशिमर्दनम्।**
**बालिप्रमथनं वीरं सुग्रीवेप्सितराज्यदम्।।४५।।**

**रा०कृ०भा०**—दशग्रीवाः कण्ठा यस्य स दशग्रीवः रावणः तं हरति स्वधाम प्रापयति इति दशग्रीवहरः 'हरतेः प्रापणार्थकत्वात्।' रौद्रं रुद्रकर्माणं केशवं कः ब्रह्मा ईशः शिवः तौ वशयति इति केशवः, प्रशस्ताः केशाः यस्य सः केशवः 'केशाद्वोऽन्तरस्याम्' इत्यनेन वैकल्पिकः व प्रत्ययः, केशान् अवतीति केशवः भारतीयललनानां मर्यादाभूतकेशरक्षकः एवम्भूतं केशवं, केशीनाम रावणसैनिको राक्षसस्तं मर्दयति मृद्नाति इति केशिमर्दनस्तं केशिमर्दनम्, बालिनं प्रमथति इति बालिप्रमथनस्तं बालिप्रमथनम्, वीरं विशेषेण ईरयति कम्पति राक्षसान् इति वीरः तं वीरम्, सुग्रीवाय ईप्सितं राज्यं ददातीति सुग्रीवेप्सितराज्यदः तं सुग्रीवेप्सितराज्यदम् एवम्भूतं भगवन्तं श्रीरामं प्रणमामि।।श्रीः।।

**राघवकृपाभाष्य**—दश शिर वाले रावण को अपने धाम पहुँचाने वाले या स्वधाम देने वाले, रुद्रकर्मा और केशव अर्थात् ब्रह्मा और शंकर का भी नियन्त्रण करने वाले एवं सुन्दर केशों वाले तथा भारतीय नारियों के मर्यादामय केशों की रक्षा करने वाले, केशी नामक रावण के सेनापति राक्षस का वध करने वाले और बालि का एक ही बाण में प्रमथन करने वाले अपनी वीरता से वीरशिरोमणियों को भी कम्पित करने वाले, सुग्रीव को मनोवाञ्छित राज्य देने वाले ऐसे भगवान् श्रीराम को मैं प्रणाम करता हूँ।।श्री।।


**नरवानरदेवैश्च सेवितं हनुमत्प्रभुम्।**
**शुद्धं सूक्ष्मं परं शान्तं तारकं ब्रह्मरूपिणम्।।४६।।**

**रा०कृ०भा०**—नराश्च वानराश्च देवाश्च इति नरवानरदेवाः तैः नरवानर देवैः नराः भरतादयः वानराः सुग्रीादयः अंगदादयो वा देवाः शंकरादयः यद्वा नरवानररूपाः देवा इति नरवानरदेवाः तैः नरवानरदेवैः सेवितं कृतसेवम् हनुमत्प्रभुम् हनुमदीश्वरम्, केचन नराः भरतादयः केचन वानराः अङ्गदादयः देवाः शंकरादयश्च श्रीराघवेन्द्रं सेवन्ते। यद्वा नरवानररूपा

एव देवाः सेवन्ते तथा च लक्ष्मणरूपः शिवः, भरतरूपेण विष्णुः शत्रुघ्नरूपेण ब्रह्मा इमे नररूपाः त्रिदेवाः यद्वा विष्णुरेव त्रेधा नररूपधारणं कृत्वा भगवन्तं राघवं सेवते। तथा च क्षीराब्धिशायी नारायणो भरतः बैकुण्ठशायी नारायणो लक्ष्मणः, श्वेतद्वीपपतिर्नारायणः शत्रुघ्नः एवं–

**क्षीराब्धेशस्तु भरतो वैकुण्ठेशश्च लक्ष्मणः।**
**भूमा शत्रुघ्नश्चापि रामसेवार्थमागताः।।**

वानररूपाश्च देवाः ब्रह्मादयः जाम्बवान् साक्षाद् ब्रह्मांशः ब्रह्मा जाम्बवद्रूपः शिवश्च हनुमद्रूपः अग्निश्च नीलरूपः विश्वकर्म च नलरूपः एवं विधाः सर्वे देवाः नरवानररूपेण भगवन्तं राघवेन्द्रं सेवन्ते। तथा चोक्तम्–

**ऊर्जे कृष्णचतुर्दश्यां स्वात्यां भौमे सदाशिवः।**
**मेषलग्नेऽञ्जनागर्भात् प्रादुर्भूतो महेश्वरः।**

एवं नरवानररूपैः देवैः सेवितं हनुमतः आञ्जनेयस्य प्रभुं शुद्धं सकलमायाप्रपञ्चरहितं सूक्ष्मं इन्द्रियविषयमनोबुद्धिजीवात्मा व्यक्ताव्यक्ते-भ्योऽपि परीभूतं परं सर्वकारणेभ्योऽपि परं शान्तं निरस्तसकलोपद्रवं तारकं संसारसागरतारकं ब्रह्मरूपिणं ब्रह्म वेदं रूपयति बौधयति इति ब्रह्मरूपी ब्रह्मरूपिणम् एवम्भूतं रघूत्तमं रामं नमामि।।श्रीः।।

**राघवकृपाभाष्य**–नर अर्थात् मनुष्य भरतादि, वानर सुग्रीवादि, देवता शंकरादि से जो सेवित हैं अथवा नर वानरों का रूप धारण करके देवता ही जिनकी सेवा करते हैं, जैसे नर रूप में स्वयं श्रीलक्ष्मणरूप से शिव, भरतरूप से विष्णु, शत्रुघ्नरूप से ब्रह्मा अथवा क्षीरसागरशायी विष्णु भरतरूप से, वैकुण्ठविहारी विष्णु लक्ष्मणरूप से एवं श्वेतद्वीपपति विष्णु शंकररूप से, शत्रुघ्न इसी प्रकार वानररूप में भी देवतागण जिन प्रभु राम की सेवा करते हैं, जैसे जाम्बवान् के रूप में ब्रह्मा, हनुमान जी के रूप में शिव एवं नील के रूप में अग्नि, नल के रूप में विश्वकर्मा इस प्रकार तत्तद्देवता तत्तद्वानरों के रूप में में जिन प्रभु की सेवा करते हैं, जो हनुमान जी के भी प्रभु हैं, जो शुद्ध माया प्रपञ्चों से रहित, आत्मा से भी सूक्ष्म पर सबके परायण, शान्त–सकल उपद्रवों से रहित हैं, तारक–जो संसार सागर से जीव को तार देते हैं, ब्रह्मरूपिणम्–जो स्वयं ब्रह्मस्वरूप, अथवा ब्रह्मवेद के प्रतिपादक

वेदमय हैं ऐसे श्रीराम को मैं प्रणाम करता हूँ।।श्री।।


**सर्वभूतात्मभूतस्थं सर्वाधारं सनातनम्।**
**सर्वकारणकर्तारं निदानं प्रकृतेः परम्।।४७।।**

**रा०कृ०भा०**–सर्वभूतात्मभूतस्थम्–सर्वेषां भूतानां आत्मभूतः जीवात्मा तेन सह तिष्ठति इति सर्वभूतात्मभूतस्थः तं सर्वभूतात्मभूतस्थं अन्तर्यामिरूपेण प्रतिशरीरं जीवात्मना सह तिष्ठन्तं, सर्वाधारं–सर्वेषामाधारं सर्वाधारम् सर्वेषां जगतां आधारभूतं, सनातनम्–नित्यं, सर्वकारणकर्तारं–सर्वेषां जन्मपाल–मृत्यूनां कारणानि ब्रह्मविष्णुमहेशाः तेषामपि कर्तारं रचयितारम्, सर्वेषां निदानं परमकारणम्, प्रकृतेः मायातः परं तादृशं श्रीराममहं प्रणमामि।।श्रीः।।

**राघवकृपाभाष्य**–जो सम्पूर्णभूत प्राणियों के आत्मभूत जीवात्मा के साथ प्रत्येक शरीर में अन्तर्यामीरूप से वर्तमान रहते हैं, जो समस्त जगत् के आधार हैं, जो सनातन अर्थात् निरन्तर विद्यमान हैं, जो सभी के कारणरूप ब्रह्मा, विष्णु, शंकर के भी रचयिता हैं,जो सबके परम कारण और प्रकृति अर्थात् माया से परे हैं, ऐसे श्रीराम को मैं प्रणाम करता हूँ।।श्री।।


**निरामयं निरामासं निरवद्यं निरञ्जनम्।**
**नित्यानन्दं निराकारं अद्वैतं तमसः परम्।।४८।।**

**रा०कृ०भा०**–आमयो रोगः निर्गताः आमयाः यस्मात् आमयात् निष्क्रान्तं वा निरामयम् यद्वा निराकृताः भक्तानां आमयावा निरामयम् निराभासं–आभासः प्रतिबिम्बः निराकृतः आभासः येन सः निराभासस्तं निराभासम् इत्यनेन जीव प्रतिविम्बवादो निराकृतः। यत्तु जीवं ब्रह्मणो प्रतिविम्बं मन्यन्ते तदनर्गलम्। निरामासं इति शब्देनैव तस्याप्रामाणिकता सूचिता। ननु 'ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः। इति वचनविरोधः स्यात् इति चेत्, प्रकामम्। दीयतामस्मै श्रुतिविरोधपातकमलीमसमानस विजल्पितविगीतवचनाय तिलाञ्जलिः। 'जीवो ब्रह्मैव नापरः' इत्यस्य विष्मन भूतवचनस्य क्वापि श्रुतिस्मृष्वदर्शनात्। ननु ब्रह्मविद् ब्रह्मैवभवति इत्यस्याः श्रुतेर्विरोध। नैष दोषः। ब्रह्मविद् ब्राह्मणः आ ईथत् इव भवति भोगनामे समतामुपैति इति व्याख्यानेनादोषात्। तथा हि ब्रह्मणः आ इव भवतीति विग्रहे 'सुपा सुलुक्' इत्यनेन षष्ठीलुकि वृद्धौरूपसिद्धिः। अतएव 'नित्यो

नित्यानां' कठ० ३/१३ 'द्वा सुपर्णा सयुजा सखाया- मुण्डक ३/१/१ इत्यादयः श्रुतयः संगच्छन्ते। तस्माज्जीवो न ब्रह्म प्रतिबिम्बः प्रत्युत दासः। अतः श्रुतिः प्राह-ब्रह्मदासा ब्रह्मदासा ब्रह्मदासा कितवः। निरवद्यं-अनिन्दितम्, निरञ्जनम् निर्गतं अञ्जनं यस्मात् स निरंजनस्तं निरञ्जनम्, अंजनं कर्मबन्धनलेपः उभावपि भगवति न विद्येते अतएव निरामासम् इत्यनेन प्रतिबिम्बवादस्य, निरञ्जनमित्यनेन च कर्मबन्धनस्य निराकरणात् अद्वैतवादिनां प्रतिबिम्बवादोऽप्यत्र परास्तः। नित्यानन्दम् नित्यः आनन्दः यस्य सः नित्यानन्दः तं नित्यानन्दम्, जीवस्य आनन्दः अनित्यः क्षणभङ्गुरश्च परमात्मनस्त्वानन्दो नित्यः अतएव नित्यानन्दरूपविशेषणम्, निराकारम्-निराकृतः आकारः येन सः निराकारः तं निराकारम्, अद्वैतम्-विशिष्टाद्वैतं, तमसः परम्-अन्धकार-विवर्जितम् श्रीमद्रामं अहं प्रणमामि।

नन्विह निराकारविशेषेण भगवतो निराकारवादः साधित इति चेत् न। निराकारशब्दो ह्यत्र नैवाकारराहित्यं सूचयति। किन्तर्हि? प्राकृताकारनिराकरणम्। कथमिति चेत्? श्रूयताम्। भगवान् सर्वथैव साकारः सगुणश्च। यदि भगवान् आकाररहितः स्यात् तदा तत्र नञो निर्देशः स्यात्। नञोनिर्देशे च 'तस्मान्नुडचि' इत्यनेन अच् परे नुड़ागमः स्यात्। न उचितं अनुचितं, न आवश्यकं अनावश्यकं, न उपयुक्तं अनुपयुक्तं इत्यादिवत्। यदि भगवान् आकाररहितः स्यात् तदा तत्र अनाकारः इति शब्दः प्रयुक्तः स्यात्। स च नास्ति अतो निश्चीयते यद् भगवान् सर्वथैव आकाररहितः नहि, सर्वथैव परिकलितदिव्यमंगलमयाकारः, हृतभूमिभारः अतसिकुसुमसुकुमारः कौसल्याकुमारः।

ननु भगवतः साकारत्वे तस्यानित्यत्वापत्तिः, यतो यद्यत्साकारं तत्तदनित्यं घटादिवत् कार्यत्वात्, इति चेन्न। वेदप्रतिपादितसिद्धान्तेषु अनुमानप्रसरात्। यथा-वमनंअभक्ष्यं वान्त्वात् मधुवत्। इत्याद्यनुमानेषु यद्यद्वमनं तत्तदभक्ष्यमिति साध्यते वान्तत्वहेतुना किन्तु इदमनुमानं मधुनि न प्रसरति। तस्य वान्तत्वेऽप्यभक्ष्यत्वाभावात्। एवं अस्थ्यशुद्धं शरीरनिसृतत्वात् इत्यनुमानमपि शंखे न प्रसरति वेदविहितत्वात्। एवमत्रापि श्रुतिविहिते अवमानप्रसराभावः। अतएव वाक्यपदीये-

**वेदशास्त्राविरोधी यस्तर्कश्चक्षुरपश्यताम्।**

वेदशास्त्राविरोधी तर्कः अपश्यतां चक्षुः। तस्मात् वेदशास्त्रानुमोदित सिद्धान्तेषु तर्काभावः समुचितः। ननु भगवतः साकारत्वे श्रुतौ किं मानम्? बहूनि प्रमाणानि–**अग्निर्यथैकभुवनस्य साक्षी रूपं रूपं प्रतिरूपो बभूव। एवं देवः सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपं बहिश्च। एवं–सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्' 'वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात् प्रजापतिश्चरति गर्भे अन्तर्जायमानो बहुधा विजायते। अहिरिव हो वै परियति बाहुं जाया हेतुं परिवादमान** इत्यादयः शतशो मन्त्राः भगवतः साकारत्वमेव साधयन्ति न तु निराकारत्वम्। अतएव निराकार शब्दे न निषेधपरकत्वम्। तथा च–निरुपमाः आकाराः यस्य सः निराकारः। भगवतः आकाराणां उपमारहितत्वात्। निरन्तरा आकाराः यस्य सः निराकारः। निश्चिताः आकारा यस्य श्रुतिसम्मताः सः निराकारः। निश्शेषा आकाराः यस्य सः निराकारः। एवं आकारेभ्यः स्तम्भादिभ्यः निष्क्रान्तः इति निराकारः भगवान् सर्वत्र निराकृतः सौन्दर्यसारसर्वस्वेन सांसारिकः आकारः येन सः निराकारः। एवम्भूतं निराकारं अद्वैतं द्वाभ्यां स्त्रीपुरुषाभ्यां इतं जातं इति द्वैतम् न द्वैतं अद्वैतम् जगद्भिन्नं स्त्रीपुरुषनिरपेक्षजन्मानं विशिष्टाद्वैतं तमसः परं अन्धकारात्परीभूतं रघुनन्दनं रामं अहं नमामि॥श्रीः॥

**राघवकृपाभाष्य–**जो परमात्मा संसार के रोग से रहित हैं अथवा जिन्होंने अपने भक्तों को भी संसार के रोग से मुक्त कर दिया है, जो निराभास अर्थात् प्रतिबिम्बवाद से रहित हैं, जो निरवद्य किसी प्रकार से भी निन्दित नहीं हैं, जो निरंजन संसार के कर्मबन्धन के लेप से रहित हैं जिनका आनन्द नित्य है जो निराकार अर्थात् जिनके आकार निरुपम हैं सारे आकार ही जिन परमात्मा के हैं, जिनके आकार निश्चित हैं, जिनके आकार निरन्तर हैं, जिन्होंने अपने सौन्दर्य की महिमा से संसार के सभी आकारों को निराकृत किया है, ऐसे विशिष्टाद्वैत प्रतिपाद्य तम से परे परम प्रकाशस्वरूप परमात्मा श्रीराम को मैं नमस्कार करता हूँ।

यहाँ निराभास शब्द से भगवान नारद ने मायावादसम्मत प्रतिबिम्बवाद का निषेध किया है। आभास को प्रतिबिम्ब कहते हैं। निराभास

का अर्थ है जो आभास अर्थात् प्रतिबिम्ब से परे है अथवा जिसने प्रतिबिम्ब को निराकृत किया है। क्योंकि यदि जीव का प्रतिबिम्ब होता तो कठोपनिषद् में जीव के लिए षष्ठी बहुवचनान्त तथा ब्रह्म के लिए प्रथमा एकवचनान्त का तीन बार प्रयोग क्यों किया जाता। यथा–

**नित्यो नित्यानां, चेतनश्चेतनानां एको बहूनां यो विदधाति कामान्।**

इस मन्त्र में ब्रह्म तथा जीव दोनों को ही नित्य कहा गया है। भला नित्यनित्य का प्रतिबिम्ब कैसे हो सकेगा? मुण्डकोपनिषद के तृतीय मुण्डक में यह स्पष्ट कहा गया है कि अनादिकाल से सुन्दर पंखों वाले, एक साथ रहने वाले परस्पर मित्र ब्रह्म और जीवरूप दो पक्षी संसारवृक्ष पर चिपक कर बैठे हैं। इस प्रकार सहस्रों मन्त्र जीव तथा ब्रह्म का स्वरूपगत भेद सिद्ध करते हैं।

यहाँ यह सन्देह होना स्वाभाविक है कि भगवान् को निराकार कहा जा रहा है, जिससे कि निराकारवाद सिद्ध हो जायेगा। इसका उत्तर यह है कि यहाँ निराकारवाद सिद्ध नहीं होगा। क्योंकि निर् का अर्थ कभी निषेध नहीं हुआ करता। जैसे 'न' की विवक्षा में अकार आ जाता है। और स्वर परे रहने पर उसमें 'नुट्' का आगम हो जाता है। जैसे–न आवश्यक को अनावश्यक कहते हैं। न शिष्ट को अशिष्ट कहते हैं, इसी प्रकार यहाँ भी न आकार को अनाकार कहना चाहिए था। ईश्वर की कृपा से भगवान् को कभी अनाकार नहीं कहा गया, उन्हें निराकार ही कहा गया है। इसका तात्पर्य यही है कि श्रुति और स्मृति का भगवान के लिए आकार राहित्य में तात्पर्य नहीं है। उनके पास सभी आकार निरन्तर रहते हैं, वे निरन्तर आकारवान् हैं। उनका आकार नित्य है। आप कह सकते हैं कि जो साकार होता है, वह अनित्य होता है। मिट्टी कारण है इसलिए वह अनित्य है, घड़ा कार्य है वह अनित्य है। इसी प्रकार जो भी निर्मित होगा, वह नित्य होगा। ऐसी व्याख्या करने पर ईश्वर में अनित्यतापत्ति आ जायगी? इसका उत्तर यह है कि वेद शास्त्र से अविरोधी तर्क में ही अनुमान का प्रसर होता है। जिस अनुमान में वेदशास्त्र का विरोध हो रहा हो वहाँ अनुमान का प्रसर नहीं होता। जैसे सामान्यतः वमन अभक्ष्य इसलिए है क्योंकि वान्त है। वान्तत्व हेतु से वमन

में अभक्ष्यत्व सिद्ध किया जा रहा है। परन्तु मधु में इस प्रकार अनुमान करने से श्रुति का विरोध होगा। क्योंकि श्रुति ने-'मधु वाता ऋतायते' 'मधु क्षरन्ति सिन्धवः' कहकर मधु को पवित्र माना है। इसलिए वेदशास्त्र से विरोधी तर्क अर्थात् वेदविरुद्ध अनुमान वैदिक सिद्धान्त में प्रयुक्त नहीं किया जा सकता। जैसे-अस्थि अशुद्ध है शरीर से निकल जाने के कारण, परन्तु शंख को अशुद्ध नहीं माना जाता। क्योंकि शंख को वेद ने शुद्ध माना है। पाञ्चजन्याय विद्महे, पवमानाय धीमहि तन्नोः शंखः प्रचोदयात्। ठीक इसी प्रकार सर्वत्र यह अनुमान प्रसरित होगा जो सावयव होता है, वह अनित्य होता है कार्य होने के कारण। परन्तु ईश्वर के यहाँ इस अनुमान का प्रसर नहीं होगा। सभी आकार भगवान् के हैं, इससे निश्शेषाः आकाराः यस्य तन्निराकारम् निश्शेष आकार जिसके हैं, उसे निराकार कहते हैं। भगवान् के आकार की कोई उपमा नहीं है इसलिए उनके आकार निरुपम हैं। अतः निरुपमाः आकाराः यस्य तन्निकारम्। जिसके आकार की कोई उपमा न हो, उसे निराकार कहते हैं। भगवान् के आकार निश्चित हैं-निश्चिताः आकाराः यस्य तन्निकाराम्। भगवान् के आकार में कोई दोष नहीं होता-निर्दोषाः आकाराः यस्य तन्निराकारम्। इसलिए वे निराकार हैं। भगवान् के आकार में किसी प्रकार का मल नहीं होता। निर्मला आकाराः यस्य तन्निकारम्। जिसका आकार निर्मल हो, उसे निराकार कहते हैं। भगवान् के आकार में कोई कलङ्क नहीं होता-निष्कलंका आकारा यस्य तन्निराकारम्। निस्संशया आकारा यस्य तन्निराकारम्। निर्मोहा आकारा यस्य तन्निकारम्। निर्मानाआकारा यस्य तन्निराकारम्। संसार के सम्पूर्ण घटपटादि आकार भगवान् से ही निकले हैं-**यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति।** इसलिए सम्पूर्ण आकार भगवान् से निकले हैं-निर्गताः आकाराः यस्मात् इसलिए भगवान् को निराकार कहते हैं। भगवान् अद्वैत अर्थात् विशिष्टाद्वैत हैं अर्थात् उनमें किसी प्रकार का द्वैत नहीं है। द्वाभ्यां स्त्रीपुरुषाभ्यां इतं जातं इति द्वितं द्वितमेव द्वैतम्, न द्वैतम् अद्वैतम् भगवान् का जन्म किसी स्त्री पुरुष से नहीं होता, उनका जन्म दिव्य होता है, इसलिए उनको अद्वैत कहा गया है। भगवान् तम से परे अर्थात् अन्धकार

से परीभूत हैं, ऐसे भगवान् को मैं प्रणाम करता हूँ॥श्री॥



**परात्परतरं तत्त्वं सत्यानन्दं चिदात्मकम्।**
**मनसा शिरसा नित्यं प्रणमामि रघूत्तमम्॥४९॥**

**रा०कृ०भा०**–परात्परतरं–बुद्धे परः जीवात्मा,'तस्मात्परमव्यक्तं, तस्मादपि परं इति परात्परतरम्, यद्वा परतत्त्वं अचित्तत्त्वं, तस्मादपि परं चित्तत्त्वं जीवाख्यम्, तस्मादपि परं ततो तेन विशिष्टं अद्वैततत्त्वम् इति परात्परतरम्। अथवा ब्रह्मविष्णुमहेशाः पराः ततोऽपि परः विष्णुः ततोऽपि परं महाविष्णुरूपम् इति परात्परतरम्। एवम्भूतं यत्तत्वं, यच्च सत्यानन्दम् सत्यः आनन्दः यस्य सः सत्यानन्दः सद्भ्यो हितः सत्यः आनन्दः यस्य सः सत्यानन्दस्तं सत्यानन्दम्, चित्–चेतना आत्मा स्वरूपं यस्य तच्चिदात्मकम् एवम्भूतं रघूत्तमं रघुषु उत्तमं रघूत्तमम् श्रीरामं मनसा शिरसा मूर्ध्ना प्रणमामि॥श्रीः॥

**राघवकृपाभाष्य**–जो परात्पर से भी श्रेष्ठ तत्त्व है, जो सत्यानन्द अर्थात् सत्य में आनन्दानुभव करता है, सत्य ही जिसका आनन्द है, क्षणभंगुर नहीं सत्य अर्थात् जिसका आनन्द सन्तों के लिए हितकर है, चित्–चेतना ही जिनका स्वरूप है ऐसे रघूत्तम भगवान्श्रीराम को मैं मन और शिर दोनों से प्रणाम करता हूँ॥श्री॥

**विशेष**–यहाँ परात्परम्' शब्द महत्त्वपूर्ण है, जीवात्मा पर है। अव्यक्ततत्त्व उससे भी पर है और उससे भी सूक्ष्म है परमात्मतत्त्व। इसलिए उसे 'परात्परतर' कहा गया है। अथवा–ब्रह्मा, विष्णु और शंकर ये तीनों पर देवता हैं। इनमें भी विष्णु अधिक सूक्ष्म हैं, इसलिए उन्हें 'परात्पर' कहा जाता है। भगवान् राम महाविष्णु होने से उनसे भी श्रेष्ठ हैं, इसलिए उन्हें 'परात्परतर' कहा गया। अथवा–अचित् तत्व से सूक्ष्म चित्तत्व जीवात्मा है और उससे भी सूक्ष्म चिदचिद्विशिष्ट परमात्मतत्व है इसलिए वह परात्परतरतत्व है। और वही परात्परतरतत्त्व परमात्मा श्रीराम हैं। जैसा कि वाल्मीकिरामायण में मन्दोदरी भी कहती है–

**व्यक्तमेष महायोगी परमात्मा सनातनः।वा०रा० युद्धकाण्ड १११/१४**



**सूर्यमण्डलमध्यस्थं रामं सीतासमन्वितम्।**
**नमामि पुण्डरीकाक्षममेयं गुरुतत्परम्।।५०।।**

**रा०कृ०भा०**–सूर्यस्य मण्डलं सूर्यमण्डलम् तस्य मध्ये तिष्ठतीति सूर्यमण्डलमध्यस्थः तम् सूर्यमण्डलमध्यस्थम्, सीतया जनकनन्दिन्या समन्वितं एवम्भूतं पुण्डरीकाक्षं पुण्डरीकमिव निर्दोषे अक्षणी यस्य तं पुण्डरीकाक्षं, तथा च अमेयं प्रमाणागोचरम्। श्रीरामं गुरुतत्परं गुरुषु तत्परं सेवार्थं, गुर्वोः वसिष्ठविश्वामित्रयोस्तत्परं सेवार्थं वा उद्यतं एवम्भूतं राममहं नमामि।

इह भगवतः सूर्यमण्डलस्थत्वेन छान्दोग्योपनिषद् प्रतिपाद्य सूर्यमण्डलस्थ परब्रह्मणश्चर्चा, तेन च भगवतः श्रीरामस्य औपनिषदत्वं प्रतिपादितम्। स च राघवः सीतया नित्यं समन्वितः सीता नाम सिनोतीति सीता। 'सिञ् बन्धने' या रामचन्द्रं प्रेमबन्धनेन बध्नाति सा सीता। सीयते भगवतापि प्रेमबन्धनेन बध्यते या सा सीता। ष्यति क्लेशं तनूकरोति इति सीता, स्यति भक्तदुखं खण्डयति इति सीता। सवति जीवं पालयति या सा सीता, सुवति जीवश्रेयसे भगवन्तं श्रीरामं प्रेरयति या सा सीता। एवम्भूता या सीता तया समन्वितम्। अतएव मानसकाराः प्राहुः–

**उद्‌भवस्थिति संहारकारिणीं क्लेशहारिणीम्।**
**सर्वश्रेयस्करीं सीतां नतोऽहं रामवल्लभाम्।।**

ननु उद्‌भवकारिणी ब्रह्माणी, स्थितिकारिणी लक्ष्मी, संहारकारिणी महेशानी रुद्राणी एवमुद्‌भवस्थितिसंहारकारिणीति वर्णनेन सीतायाः लक्षणानि तत्राप्यति व्याप्तानीति चेत् न। इह कारिणीतिण्यन्तनिष्पन्नः प्रयोगः। तथा च उद्‌भवस्थितिसंहारान् कारयतीति, तच्छीला या सा उद्‌भवस्थितिसंहारकारिणी तां उद्‌भवस्थितिसंहारकारिणीम्। सीता ब्रह्मणा उद्‌भवंकारयति, विष्णुना स्थितिं कारयति शंकरेण च संहारं कारयति। किम्बहुना, श्रीरामचन्द्रेण च क्लेशं हारयति। ननु सर्वं सा कारयति उद्‌भवस्थिति संहाराख्यं कर्म, क्लेशं च हारयति तर्हि स्वयं किं करोतीति चेत्? श्रूयताम्। सर्वश्रेयस्करीं–सर्वेषां श्रेयांसि स्वयमेव करोति तच्छीला। अन्यत् सर्वं अन्यैः कारयति किन्तु शरणागतिरूपं श्रेयः स्वयमेव करोति। सीतारूपा, सीतापुरस्कारश्च परिगीता महर्षिभिः। सीताघटक रूपा। ईश्वरजीवयोर्मध्ये

घटकत्वभूमिकां निभालयति भगवती सीता।

ननु विशिष्टाद्वैतवादे त्रीणि तत्त्वानि-चित्तत्वम्-जीवात्माख्यम्, अचित्तत्त्वम् मायाख्यं प्रकृत्याख्यं वा, तद् विशिष्टतत्त्वम्-परमात्माख्यम् एषु त्रिषु तत्त्वेषु परिगणितेषु स्वीकृतेषु च सीता नाम किम् तत्त्वम् इति चेत् शृणु। अन्यदार्शनिकसम्मतमिव सीता न खलु जीवतत्त्वम्, अन्ये मन्यन्ताम् श्रियं जीवतत्त्वम्। किन्तु वयं तु सीतां जीवतत्त्वं न मन्यामहे तर्हि का नाम सीता? ब्रह्मतत्त्वाख्या। यदि सीता ब्रह्मतत्त्वं रामोऽपि तर्हि कथं व्याख्या कर्तुं शक्यते? सीतापि ब्रह्मतत्त्वं रामोऽपि ब्रह्मतत्त्वं तर्हि कथंव्याख्या कर्त्तुंशक्यते? सीताऽपिब्रह्मतत्वरामोऽपिब्रह्मतत्त्वंतर्हि द्वैततत्वापत्तिः इति चेन्न। सीताराम-योरभेदः इदमेव विशिष्टाद्वैतम्। तथा हि-परमव्योमविहारी, साकेताधिपतिः श्रीरामाख्यं तत्त्वम् कारणं ब्रह्म, एवं जगत्प्रविष्टं, सृष्ट्यनुबिद्धं यद् ब्रह्म तत्कार्यं ब्रह्म, द्वे अपि, ब्रह्मणी चिदचिद्भ्यांविशिष्टे। एवं चिदचिद्विशिष्टं कारणं, ब्रह्म, चिदचिद्विशिष्टं कार्यंबह्म तयोर्विशष्टयोरद्वैतं इति विशिष्टाद्वैतम्। तथैव श्रीरामचन्द्रः कारणब्रह्म भूमिकां निभालयति। तथा चोक्तम्—

**बोले वचन नीतिप्रतिपालक। कारन मनुज दनुजकुल घालक।।**

श्रीसीता कार्यब्रह्मभूमिकां भजते अतएव उद्भवस्थितिसंहारकारिणीं क्लेशहारिणीं इति गोस्वामिचरणैरुक्तम्। ते द्वे अपि तत्त्वे सीतारामाख्ये विशिष्टे चिदचिद्भ्याम्। चित् जीवाख्यः परमभागवतसमूहः अचित् स्वीकृतताभ्यां विशिष्टं चिदचिद्विशिष्टं कारणं ब्रह्म श्रीरामाख्यं कार्यंब्रह्म च श्रीसीताख्यं विशिष्टं च विशिष्टं च विशिष्टे तयोरद्वैत विशिष्टयोः श्रीसीतारमयोः अद्वैतं ऐक्यं इति विशिष्टाद्वैतम्।

अतएव श्रीरामतापनीयोपनिषदि—

**रामःसीताजानकीरामचन्द्रो।नित्याखण्डंयेचपश्यन्तिधीराः।**

रामः सीता, सीता च रामः द्वयोर्मध्ये न कोऽपिभेदः। वरूपसम्बन्धावच्छिन्न सीतात्वावच्छिन्न सीतानिष्ठप्रकारता निरूपिता, रामत्वावच्छिन्न रामनिष्ठा विशेषता इति सीताराम शब्दपदार्थः। एवमेव श्रीसीतारामयोर्मध्ये स्वरूपसम्बन्धः। नै वकश्चन अपरः सम्बन्धः। अत एव

श्रीरामचरितमानसेऽपि वनगमनप्रसंगे सखिभिः पृष्टा सती सीता श्री रामचन्द्रस्य परिचयं केवलं संकेतेन ददाति–

**खंजन मंजु तिरीछे नयननि। निजपति कहेउ तिन्हहिं सिय सयननि।।**

सीतारामयोः सर्वथैव स्वरूपतः सम्बन्धतश्च अभिन्नत्वात्। सीतैव रामः रामैव सीता। एवमत्रापि श्रीराम विशिष्टाद्वैतमेव। तथा हि–चित्‌लक्ष्मणः, अचित् सीता ताभ्यां विशिष्टं श्रीरामतत्त्वं विशिष्टाद्वैतम्। ननु यदि सीतारामयोर्मध्ये स्वारूपसम्बन्धस्तर्हि सीतायाः परित्यागः कथम्? नहि तावत्सीता परित्यागः। सीता तनत्यं श्रीरामेण सह तिष्ठति। वाल्मीकीय–रामायणे असकृदुक्तत्वात्–

**अनन्या हि मया सीता भास्करेण यथा प्रभा।**

सीतारामयोर्मध्ये अभेदः अनन्यता। तथा च मानसकाराः–

**प्रभा जाहि कहँ भानु बिहाई। कहँ चन्द्रिका चन्द्र तजि जाई।।**

अतो नास्ति सीतापरित्यागः। ननु वाल्मीकीय उत्तरकाण्डे सीतापरित्यागचर्चादर्शनात् स प्रसंगोऽनिवारितमिति चेत् न। वाल्मीकीय रामायणस्य उत्तरकाण्डस्यैव पूर्वं सन्देहग्रस्तत्वात्। वस्तुतस्तु वाल्मीकिर्ब्रह्मणा निर्दिष्टः नारदश्रावित कथां श्रावयितुम्।

**धर्मात्मनो भगवतो लोके रामस्य जीवतः।**
**वृत्तं कथय वीरस्य यथा ते नारदाच्छ्रुतम्।।**

यथा येन प्रकारेण ते नारदात् श्रुतं त्वया श्रीरामचरित्रं कथनीयम्। संयोगतः नारदकथितमूलरामायणे सीतावनवासप्रसंगस्य कुत्राप्यनुपलब्धेः। तत्कथायाश्च वाल्मीकिना कथयितुमशक्यत्वात्। कथितायाच्च ब्रह्मणो निर्देशोल्लंघनापत्तेः सीतावनवासकथैव अप्रामाणिकी। सीता तु श्रीरामेण सह नित्यं सम्मिलिता। सीतां श्रीरामचन्द्रस्त्यक्तुं शक्नोत्येव नहि।

**अनन्या हि मया सीता भास्करेण यथा प्रभा।**

अतएव सीतासमन्वितं सीतया युक्तम् वस्तुतस्तु। यथा जलं माधुर्यं हातुं न शक्नोति, यथा सूर्यः प्रभां परिहातुं न शक्नोति यथा चन्द्रमसश्चन्द्रिका न गच्छति तथैव सीता रामात् न गच्छति। सीतां रामः न त्यक्तुं शक्नोति।

उभयोरपि अन्योन्याश्रितत्वम्। एकमेव ब्रह्म अभिधानात्मक भावनानुकूल-शक्त्यवच्छिन्नमैश्वर्योपहितं चेतनं संविदानन्दाख्यं श्रीसीतानामकं तत्त्वम्। अपरञ्च अभिधेयात्मकभावनानुकूलसत्यवच्छिन्नवात्सल्योपहितचैतन्यं सच्चिदानन्दाख्यं तत्त्वं श्रीरामाख्यम्। सीता संविदानन्दः श्रीरामः सच्चिदानन्दः। संविदानन्दसच्चिदानन्दयोरभेदात् श्रीसीतारामयोर्मध्ये न कोऽपिभेदः। अर्थात् सीताऽपि ब्रह्म श्रीरामोऽपि ब्रह्म। सौन्दर्यसारसर्वस्वं माधुर्येणोपवृंहितं एकमेवाद्वितीयं यत् तत्त्वमेतद्द्विधाकृतम्।

अतएव सीतया भगवतः नित्यसमन्वितत्वात् द्वयोः सम्बन्धस्यापि स्वरूपाख्यस्य श्रुतिसम्मतत्वात् द्वयोर्मध्ये न कदापि वियोगः। अतएव मानसकारः कथयति-शारीरिकः वियोगस्तु सीतायाः सम्भवो नहि, कदापि वचनवियोगो भवति।

**अस कहि सीय विकल भई भारी। वचन वियोग न सकी सँभारी।।**

तस्मात् सीतात्यागप्रकरणं निरर्थकम्। ननु सीतात्यागकथा कुतो लभ्येति चेत्? केनचित्सनातनधर्मविद्वेषिणा गुणाढ्येन कृतेयं कल्पना सीतात्यागस्य, या अधुनापि श्रीरामकथासुधां विषयति एवम्भूतं पुण्डरीकाक्षं पुण्डरीकमिव निर्दोषनेत्रवन्तं अमीयं प्रमाणैरगोचरम्। वस्तुतस्तु भगवान् केनापि प्रमाणेन पूर्ण प्रमाणयितुं शक्यते नहि।

**प्रत्यक्षेणानुमित्या वा यस्योपायो न विद्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।**

प्रत्पक्षादि सकलप्रमाणागोचरत्वे सति शब्दप्रमाणगोचरत्वं नाम अभेयत्वम्। प्रत्यक्षादिभिः प्रमाणैः परमात्मनः प्रामाण्यं सम्भवं नहि, एवं शब्दप्रमाणेन परमात्मनः प्रामाण्यम्। यतो हि प्रत्यक्षं नाम इन्द्रियार्थ-सन्निकर्षजन्यं ज्ञानम्। यत्रेन्द्रियविषयसन्निकर्षजन्यं ज्ञानं भवति तदेव प्रत्यक्षं भवति। भगवांश्च प्रत्यक्षतः परीभूतः यतो इन्द्रियातीतत्वात् विषयातीतत्वाच्च।

**इन्द्रियेभ्यः पराः ह्यर्थाः अर्थेभ्यश्च परं मनः।**

अनुमानं हि निष्फलमत्र यतो हि व्याप्त्यनुमोदितं ज्ञानं,

व्याप्तविशिष्टपक्षधर्मताज्ञानमेव लिङ्गपरामर्शः। तज्जन्यं ज्ञानमनुमानं व्याप्तिश्चहेतुसाध्यसहचारित्वं तच्च प्रत्यक्षमूलकम्। केनचित् पर्वते धूम दर्शनात् 'पर्वतो वह्निमान् धूमात्' इत्यनुमीयते। इतः पूर्वं महानसे धूमवह्न्योस्तेन व्याप्तिर्गृहीता। तस्मात्प्रत्यक्षमूलकमनुमानम् इह प्रत्यक्षाभावे का कथानुमानस्य। अर्थात् प्रत्यक्षमूलकं भवत्यनुमानम्। संयोगतः अत्र अनुमानमपि कर्तुं नाशक्यते। निरुपमत्वान्नोपमानं भगवतः सादृश्याभावात्। अतः **'न तत्समोऽस्त्यभ्यधिकश्च दृश्यते'** इति श्रुतेः।

**नैवमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत्।**
**न तस्य प्रतिमा अस्तीत्यस्य नाम महद्यशः।**

इति श्रुत्यापि भगवतः सादृश्यनिराकरणात्। अन्ततोगत्वा शब्द एव प्रमाणम्। शब्दप्रमाणका वयम्। श्रुतिरेव भगवतः सत्तायां प्रमाणम्। यथा पितुः सत्तायां माता प्रमाणम्। एवम्भूतममेयं गुरुतत्परं भगवन्तं श्रीरामं नमामि। तत्र द्वौ गुरू वशिष्ठविश्वामित्रौ। तयोः तत्परः गुरुतत्परः तं गुरुतत्परम्।।श्रीः।।

**राघवकृपाभाष्य–**मैं सूर्यमण्डल के मध्य में वर्तमान सीताजी के सहित विराजमान पुण्डरीक श्वेतकमल जैसे निर्दोष नेत्रों वाले, प्रत्यक्षादि प्रमाणों से अगोचर वसिष्ठ विश्वामित्र की सेवा में लगे हुए ऐसे भगवान् श्रीराम को प्रणाम करता हूँ।

यहाँ 'सूर्यमण्डलमध्यस्थं' कहकर छान्दोग्य में वर्णित सूर्यमण्डल में विराजमान उसी पुरुष का स्मरण किया गया, इससे भगवान् श्रीराम का वैदिकत्व सिद्ध हो जाता है। 'सीतासमन्वितम्' भगवान् श्रीराम निरन्तर सीताजी से समन्वित हैं। वे सीताजी से कभी पृथक् हो ही नहीं सकते। अब प्रश्न यह है कि यदि सीताजी से श्रीराम समन्वित हैं तो सीताजी को कौन सा तत्त्व माना जाये? विशिष्टाद्वैतवाद में चित्, अचित् और तद्विशिष्ट ये तीन तत्त्व हैं। इन तीनों में से सीताजी को क्या माना जाये? क्या सीता जी अचित् तत्त्व हैं? ऐसा नहीं है। कुछ लोग सीताजी को चित् तत्त्व मानते हैं। कुछ लोग श्री जी को चित् तत्त्व मानते हैं। पर हम ऐसा नहीं कह सकते।

हमारे यहाँ तो सीताजी भी ब्रह्म हैं। सीताजी माया नहीं हो सकतीं।

**माया खल नर्तकी बिचारी।**

सीताजी तो माया की भी माँ हैं—

**माया सब सिय माया माहूँ।**

इसलिए उन्हें महामाया भी नहीं कहा जा सकता। अतः '**ब्रह्म जीव बिच माया जैसी**' कहकर गोस्वाजी जी ने उदाहरण दिया कि श्रीरामलक्ष्मणजी के बीच में सीताजी उसी प्रकार सुशोभित होती हैं जैसे ब्रह्म और जीव के बीच में भगवान् की माया अर्थात् कृपा। इसलिए सीताजी को चित् और अचित् ये दोनों तत्त्व नहीं अपितु तद्विशिष्ट परमतत्त्व ही मानना चाहिए। सीताजी परब्रह्म हैं नारित्वावच्छिन्न नारायण हैं। वैसे तो अभिधानात्मकभावनानुकूलशक्त्यवच्छिन्नवात्सल्योपह्रितचैतन्यसंविदानन्द का नाम ही है सीता। और अभिधेयात्मकभावनानुकूलशक्त्यवच्छिन्न विग्रहशक्त्युपहितचैतन्यसच्चिदानन्द परब्रह्म का नाम है राम। एक संविदानन्द हैं तो एक सच्चिदानन्द हैं। सीताजी संविदानन्द हैं और भगवान् श्रीराम सच्चिदानन्द हैं। दोनों ही परस्पर अभिन्न हैं। श्रुति कहती है—श्रीराम ही सीता हैं और श्रीसीता ही राम हैं। दोनों में कोई भेद भी नहीं है। एक शुक्लतेजोऽवच्छिन्न ब्रह्म है और एक श्यामतेजोऽवच्छिन्न ब्रह्म है। और इसीलिए उनको विशिष्ट तत्त्व परब्रह्म तत्त्व ही माना जाता है। यदि सीताजी को भी ब्रह्मतत्त्व मान लिया जायेगा तब तो ब्रह्म दो हो जायेगा और द्वैतापत्ति आजायगी? ऐसा नहीं कहा जा सकता। क्योंकि हमारे यहाँ ब्रह्म के दो भेद कहे गये हैं—कारणब्रह्म और कार्यब्रह्म। और दोनों ही चिदचिद् से विशिष्ट हैं। कारणब्रह्म साकेताधिपति भगवान् श्रीराम वहाँ भी चित् लक्ष्मण और अचित् सीताजी इन दोनों से वे विशिष्ट हैं। और इसी प्रकार कार्यब्रह्म जो सृष्टि के निर्माण के काल में ही जीव के साथ इस संसार में प्रविष्ट हुए थे, इसलिए वही यहाँ सीताजी हैं। सीताजी कार्यब्रह्म हैं। और सीताजी भी चित् और अचित्। चित् लक्ष्मण और अचित् हनुमान् इन दोनों से विशिष्ट हैं। इसलिए विशिष्ट और विशिष्ट का एकत्व ही विशिष्टाद्वैत है। अब यहाँ प्रश्न यह है कि जब सीताजी श्रीराम जी से अभिन्न हैं तो

फिर उनका त्याग कैसा? ऐसा नहीं कहना चाहिए क्योंकि सीताजी का त्याग प्रामाणिक नहीं है। वाल्मीकि के उत्तरकाण्ड में ही सन्देह है। वाल्मीकि ने ५०० सर्गों की रचना की कल्पना की है, जबकि उत्तरकाण्ड जोड़कर ६१० सर्ग हो जाते हैं। महर्षि वाल्मीकि को नारद जी ने उपदेश दिया था कि तुम धर्मात्मा, वीरशिरोमणि श्रीराम के दिव्य चरित्र का उसी प्रकार वर्णन करोगे जैसे तुमने नारद जी से सुना है। सौभाग्य से नारद जी द्वारा कथित मूलरामायण में सीताजी के त्याग का प्रसङ्ग नहीं है। यदि वाल्मीकि जी सीता जी के त्याग का प्रसंग कहते भी हैं तो वह नारदकथित न होने से परम्पराप्राप्त नहीं है, अप्रामाणिक है। वस्तुतः सीताजी का त्याग नहीं हुआ यह सिद्धान्त है। क्योंकि वाल्मीकीय रामायण के युद्धकाण्ड में ही समस्त फलश्रुति कह दी गई फिर उत्तरकाण्ड की कोई आवश्यकता नहीं रहती और वाल्मीकि जी ने इस महाकाव्य को पौलस्त्यवधपर्यन्त ही कहा है जो युद्धकाण्ड में ही सम्पन्न हो जाता है।

**कृत्स्नं रामायणं काव्यं सीतायाश्चरितं महत्।**
**पौलस्त्यवधमित्येव चकार चरितव्रतः॥**

यदि पौलस्त्यवधमित्येव कहने का तात्पर्य यही है कि इस कथा को रामराज्याभिषेक तक ही होना चाहिए अधिक नहीं बढ़नी चाहिए। इसलिए सीतात्याग यदि वाल्मीकिरामायण के मूलरामायण में नहीं है तो उसका कोई प्रामाण्य नहीं है। वेदव्यास की प्रतिज्ञा है कि 'यन्न भारते तन्न भारते।' जो महाभारत में नहीं है, वह कहीं भी नहीं है। संयोग से सीताबनवास की चर्चा महाभारत में नहीं है। इसलिए यह प्रसंग भी महाभारत में नहीं है।

अतः सीताजी श्रीराम से कभी पृथक् नहीं हो सकतीं। जैसे मधुरता जल से पृथक् नहीं होती, जैसे सूर्यप्रभा सूर्यनारायण से अलग नहीं होती, जैसे ज्योत्स्ना चन्द्रमा से कभी अलग नहीं होती, उसी प्रकार सीता श्रीराम से अलग नहीं होतीं। उनका श्रीराम के साथ स्वरूप सम्बन्ध है। अर्थात् सीता ही राम हैं और राम ही सीता हैं। इसलिए भगवान् श्रीराम सीताजी से नित्यसमन्वित हैं। ऐसे पुण्डरीकाक्ष श्रीराम को प्रणाम करने की बात कहकर नादरजी उन्हें अमेय कहते हैं। अमेय का तात्पर्य क्या है? क्या उनको किसी

प्रमाण से प्रमाणित नहीं किया जा सकता? जो वस्तुलक्षण और प्रमाण से सिद्ध न हो वह वस्तु ही नहीं है। जबकि ब्रह्म को तो वस्तु कहा जाता है। 'लक्षणप्रमाणाभ्यां वस्तुसिद्धिः। इसका उत्तर यह है कि यहाँ अमेय शब्द का तात्पर्य केवल प्रत्यक्ष, अनुमान और उपमान, अनुपलब्धि एवं अर्थापत्ति इन पाँच प्रमाणों से ही भगवान् की अगोचरता का वर्णन है। अर्थात् भगवान् को प्रत्यक्ष से प्रमाणित नहीं किया जा सकता। क्योंकि प्रत्यक्ष इन्द्रिय और विषयों के सन्निकर्ष से होता है। भगवान इन्द्रियों से अतीत हैं और विषयों से भी परे हैं इसलिए वहाँ प्रत्यक्ष सम्भव ही नहीं है। जब भगवान् में प्रत्यक्ष सम्भव नहीं है तो प्रत्यक्षमूलक अनुमान भी हो वहाँ सम्भव नहीं हो सकेगा। क्योंकि वहाँ भी व्याप्ति के सहचरितत्त्व में प्रत्यक्ष दर्शन चाहिए। यदि किसी ने रसोई में धूम के साथ अग्नि को देखा है तो वह पर्वत में भी धूम को देखकर अग्नि का अनुमान लगा सकेगा। अर्थात् प्रत्यक्ष का अनुमान के साथ कार्यकारणभाव है। इसलिए तर्कसंग्रह की व्याख्या करते हुए चन्द्रसिंह ने स्पष्ट कहा–**प्रत्यक्षानुमानयोः कार्यकारणभावसंगतिमनुप्रेत्य प्रत्यक्षानन्तरं अनुमानं निरूपयति।** इसलिए प्रत्यक्ष और अनुमान इन दोनों से जब भगवान् को नहीं प्रमाणित किया जा सकता तो उपमान क्या करेगा? क्योंकि वहाँ सादृश्यज्ञान ही चाहिए। जबकि वेद में कह दिया गया है कि भगवान् के सदृश कोई हो ही नहीं सकता। **न तत्समश्चाभ्यधिकश्च दृश्यते। न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः।** परमात्मा का कहीं सादृश्य नहीं है, उनके कोई समान नहीं हो सकता।

**जेहि समान अतिसय नहिं कोई। ता कर सील कस न अस होई।**

अतः अमेयं–भगवान् अर्थापत्ति और अनुपलब्धि से भी उन्हें प्रमाणित नहीं किया जा सकता। क्योंकि उनके यहाँ कोई भी वस्तु असम्भव नहीं हुआ करती। सब कुछ उनके यहाँ सम्भव होता है। इसलिए केवल शब्द ही उनको प्रमाणित कर सकता है। वेद उन्हें प्रमाणित कर रहे हैं–

**द्यावाभूमी जनयन्देव एकः।** वेद के द्वारा भगवान् संसार के अभिन्ननिमित्तोपादानरूप में माने गए हैं। इसलिए शब्द प्रमाण से ही उन्हें प्रमाणित किया जा सकता है। **'अमेयं गुरुतल्परम्'**। भगवान् श्रीराम के दो

गुरु हैं वसिष्ठ और विश्वामित्र। और दोनों की सेवा में भगवान् श्रीराम तत्पर रहते हैं इसलिए 'गुरुतत्परम्' कहा गया। किम्बहुना, गुरुशब्द का अर्थ पिता भी होता है। तो 'गुरुवाक्यतत्परम्' गुरुतत्परम्। दशरथ जी की वाणी के पालन में तत्पर होकर भगवान् ने वनवास स्वीकारा।

**गुर्वर्थे त्यक्तराज्यो।.........**

इसलिए उन्हें गुरुतत्पर कहा जा रहा है॥श्री॥



**नमोऽस्तु वासुदेवाय ज्योतिषां पतये नमः।**
**नमोऽस्तु रामदेवाय जगदानन्दरूपिणे॥५१॥**

**रा०कृ०भा०**—इदानीं भगवान् नारदः भगवन्तं श्रीरामं स्तुवन् श्लोकद्वयेन सप्तभिर्विशेषणभूतैश्चतुर्थ्यन्तैः भगवन्महिमानं वर्णयन् तं नमस्करोति।

वासुदेवाय नमोऽस्तु। ज्योतिषां पतये नमः। रामदेवाय नमोऽस्तु। जगदानन्दरूपिणे नमः। वासयतीति वासुः दीव्यतीति देवः, यद्वा वसति सर्वत्र इति वासुः, दीव्यति, क्रीड़ति, मोदते, द्योतते भक्तान् प्रति गच्छति भक्तानां हृदये स्वपितीति देवः वासुश्चासौ देवश्चेति वासुदेवः तस्मै वासुदेवाय। वासुदेवो भगवान् रामः—

**'शक्तस्त्रिलोक्यां भगवान् वासुदेवः' इति भागवतस्मृतेः।**

एवम्भूताय सर्वजगन्निवासाय विद्योतमानाय च भगवते नमोऽस्तु नारदकर्तृकप्रह्वीभावोऽस्तु। ज्योतिषां नक्षत्राणां यद्वा ज्योतींषि सूर्यचन्द्रार्क विद्युत्तारकाणि तेषां ज्योतिषां पतये स्वामिने सर्वेषां प्रकाशकाय भगवते नमोऽस्तु। तथा चाह श्रुतिः–

**न तत्र सूर्योभाति न चन्द्रतारकम्, नेमा विद्युतोभान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥**

एवम्भूताय रामदेवाय रामश्चासौ देवश्च रामदेवः तस्मै रामदेवाय अथवा रामः परशुरामः बलरामश्च तयोः रामयोः परशुरामबलरामयोः देवः इति रामदेवः तस्मै रामदेवाय नमोऽस्तु। जगदानन्दरूपिणे जगता आनन्दः जगदानन्दः जगदानन्द एव रूपं यस्य सः जगदानन्दरूपी तस्मै, यद्वा जगदानन्दं रूपयति बोधयति इति जगदानन्दरूपी तस्मै जगदानन्दरूपिणे

नमोऽस्तु नमस्कारोऽस्तु॥श्रीः॥

**राघवकृपाभाष्य**–अब भगवान् नारद भगवान् श्रीराम के लिए सात चतुर्थ्यन्त शब्दों का प्रयोग कर रहे हैं जो विशेषणरूप हैं और उन्हीं से वे भगवान् की स्तुति कर रहे हैं। वासुदेव अर्थात् जो सारे संसार में निवास करते हैं और सम्पूर्ण संसार को अपने में निवास कराते हैं और जो स्वयं परमप्रकाशमान हैं, भक्तों के साथ जो विहार करते हैं, जो स्वयं प्रसन्न रहते हैं और जो भक्तों के पास निरन्तर गमन करते हैं ऐसे वासुदेव परमात्मा श्रीराम आपको नमस्कार हो। ज्योति अर्थात् सूर्य, चन्द्र, अग्नि, विद्युत्, नक्षत्र, ताराओं के पति परमप्रकाशरूप प्रभु आपको नमस्कार हो। हे रामरूप में वर्तमान देवता और हे परशुराम और बलराम के इष्टदेवता आपको नमस्कार हो। हे जगत् को आनन्द देने वाले अथवा जगत् के आनन्द का बोध कराने वाले परमेश्वर आपको नमस्कार हो॥श्री॥


**नमो वेदान्तनिष्ठाय योगिने ब्रह्मवादिने।**
**मायामयनिरस्ताय प्रपन्नजन सेविने॥५२॥**

**रा०कृ०भा०**–'वेदान्तं उपनिषत्प्रमाणकं ब्रह्मसूत्रम्' इति सदानन्दपादाः। वस्तुतस्तु वेदस्य अन्तः सिद्धान्तः यस्मिन् दर्शने तद् वेदान्तदर्शनम् ब्रह्मसूत्रम् इत्येव गीताकृत्। अतएव भगवान् गीतायाः पञ्चदशे अध्याये स्वयं प्राह–'वेदान्तकृद् वेदविदेव चाहम्'। वस्तुतस्तु वेदस्य अन्तः सिद्धान्तः, वेदं अन्तति तात्पर्येण बध्नाति इति वेदान्तः। यद्वा वेदस्य अन्तः अन्तिमो भागः उपनिषद्भागः वेदान्तः तस्मिन् वेदान्ते ज्ञानकाण्डे निष्ठो यस्य सः वेदान्तनिष्ठः तस्मै वेदान्तनिष्ठाय, योगिने योगयुजे सकलयोगवते ब्रह्मवादिने ब्रह्म वदति तच्छील इति ब्रह्मवादी तस्मै ब्रह्मवादिने, यद्वा ब्रह्म वेदं वदति स्थिरीकरोति इति ब्रह्मवादी तस्मै ब्रह्मवादिने एवम्भूताय प्रभवे नमोऽस्तु। मायामयनिरस्ताय निरस्तमायामयाय। अत्र माया एव मायामयम् अथवा मायायाः विकारः मायामयम् निरस्तं मायामयं येन स मायामयनिरस्तः 'वाहिताग्न्यादिषु च' इत्यनेन निष्ठायाः परप्रयोगः तस्मै मायामयनिरस्ताय, प्रपन्नजनसेविने प्रपन्नाः जनाः सेविनः यस्य स प्रपन्नजनसेवी तस्मै प्रपन्नजनसेविने यद्वा प्रपन्नजनान् सेवते इति प्रपन्नजनसेवी तस्मै प्रपन्नजनसेविने श्रीरामाय

**यदि तुष्टोऽसि सर्वज्ञ श्रीराम करुणानिधे।**
**त्वन्मूर्तिदर्शनेनैव कृतार्थोऽहं च सर्वथा।।७९।।**

**रा०कृ०भा०–**त्वन्मूर्तिदर्शनेन अहं सर्वथा निरन्तरं कृतार्थः अस्मि। पुनः सर्वज्ञ सर्वं जानातीति सर्वज्ञः तत्सम्बुद्धौ हे सर्वज्ञ! करुणायाः निधिः करुणानिधिः हे करुणानिधान यदि मयि सन्तुष्टोऽसि तर्हि त्वन्मूर्तिदर्शनेनैव तव मूर्तेः दर्शनेन अहं सर्वथा कृतार्थः।।श्रीः।।

**राघवकृपाभाष्य–**श्री नारद ने प्रार्थना की–हे सर्वज्ञ हे करुणानिधि श्रीराम यदि आप मुझ पर प्रसन्न ही हैं तो आपकी मंगलमयी श्रीमूर्ति के दर्शन से मैं सर्वथा कृतार्थ हो गया हूँ।।श्री।।

**धन्योऽहं कृतकृत्योऽहं पूर्णोऽहं पुरुषोत्तम।**
**अद्य मे सफलं जन्म जीवितं सफलं च मे।।८०।।**

**रा०कृ०भा०–**कृतकृत्यः कृतं कार्यं येन तथाभूतः पुरुषोत्तम पुरुषश्रेष्ठः अद्य अस्मिन्नेव दिने मे मम जीवितं जीवनं सफलम्।।श्रीः।। धन्यः/पूर्णः ??

**राघवकृपाभाष्य–**हे प्रभो! आज मैं धन्य हूँ, आज मैं कृतकृत्य हूँ। आज मैं पूर्ण हो गया। हे पुरुषोत्तम आज मेरा जन्म सफल हो गया और मेरा जीवन भी सफल हो गया।।श्री।।

**अद्य मे सफलं ज्ञानमद्य मे सफलं तपः।**
**अद्य मे सफलं कर्म त्वत्पादाम्भोजदर्शनात्।।८१।।**

**रा०कृ०भा०–**तव पादाम्भोजयोः श्रीचरणयोः चरणकमलयोः दर्शनात् मे मम ज्ञानं, तपः कर्म च सफलम्। भगवतो दर्शनमेव सकलसाफल्यसूचकम् इति भावः।।श्रीः।।

**राघवकृपाभाष्य–**आज आपके श्री चरण कमल के दर्शन से मेरा ज्ञान, मेरा कर्म और मेरा तप सफल हो गया है।।श्री।।

**अद्य मे सफलं सर्वं त्वन्नामस्मरणं तथा।**
**त्वत्पादाम्भोरुहद्वन्द्व सद्भक्तिं देहि राघव।।८२।।**

**रा०कृ०भा०–**अम्भोरुहं कमलम् तव नाम्नः स्मरणं त्वान्नामस्मरणम् त्वत् पादाम्भोरुह द्वन्द्व तव पादाम्भोरुहयोः योः यद् द्वन्द्वं युगलं तस्मिन् सद्

भक्तिं श्रेष्ठां भक्तिं देहि प्रयच्छ॥श्रीः॥

**राघवकृपाभाष्य**—हे प्रभो आज आपके नाम का स्मरण एवं सभी क्रियाएँ सफल हो गयी हैं और आप अपने युगल चरणकमल की श्रेष्ठ भक्ति दीजिए॥श्री॥

**ततः परमसम्प्रीतः स रामः प्राह नारदम्।**
**मेघ गम्भीरया वाचा धन्वी विजित मन्मथः॥८३॥**

**रा०कृ०भा०**— अत्र ईकारशब्दप्रश्लेषः धन्वी ई विजित मन्मथ इति पदच्छेदः ततः परमसम्प्रीतः परमं सम्प्रीतः परमसम्प्रीतः परम्सुन्दरः श्री रामः नारदं प्राह। कीदृशो रामः? मेघगम्भीरया वाचा मेघ इव गम्भीरा मेघगम्भीरा तया मेघगम्भीरया घनस्वनगभीरया ई रूपलक्ष्म्याः विजितो मन्मथः येन सः ई विजितमन्मथः धन्वी विशिष्टधनुर्धारी श्रीरामः नारदं प्राह ॥श्रीः॥

**राघवकृपाभाष्य**—इसके अनन्तर परमप्रसन्न हुए, अपनी शोभा से कामदेव को भी जीतने वाले धनुर्धारी श्रीराम मेघ जैसी गम्भीर वाणी में श्री नारद मुनि से बोलें॥श्री॥

श्रीराम उवाच—

**मुनिवर्य महाभाग मुने त्विष्टं ददामि ते।**
**यत्त्वया चेप्सितं सर्वं मनसा तद् भविष्यति॥८४॥**

**रा०कृ०भा०**—हे महाभाग! परमसौभाग्यशाली मुनिवर्य! हे मुनीन्द्र! वेदशास्त्रमननकर्तः तु निश्चितं इष्टं अनुकूलं तुभ्यं वदामि प्रयच्छामि च। त्वया भवता यद् ईप्सितं अभीष्टं मनसापि तद् भविष्यति तत् पूर्णं भविष्यति॥श्रीः॥

**राघवकृपाभाष्य**—हे मुनियों में श्रेष्ठ महाभाग! हे मनस्वी! अब मैं आपको इष्ट वरदान दे रहा हूँ। आपने मन में जिस वस्तु की भी इच्छा की थी वह सब मैं आज अर्पित कर रहा हूँ। वह सब इच्छा आज पूर्ण होगी॥श्री॥

नारद उवाच—नारद जी बोले—

**वरं न याचे रघुनाथ युष्मत्पादाब्जभक्तिः सततं ममास्तु।**
**इदं प्रियं नाथ वरं प्रयच्छ पुनः पुनस्त्वामिदमेव याचे ॥८५॥**

**रा०कृ०भा०**—हे रघुनाथ! वरं न याचे युष्मत् पादारविन्दे मम भक्तिः सततम् अस्तु। हे नाथ इदं प्रियं वरं प्रयच्छ त्वाम् पुनः पुनः इदमेव याचे।

हे रघुनाथ! अन्यद्वरं अहं न याचे। युष्मत् चरणारविन्दे युवयोः चरणारविन्दे श्रीसीतारामयोः चरणारविन्दयुगले मम सततं भक्तिः परमानुरक्ति र्भवतु। हे नाथ! इदं प्रियं वरमेव अभीष्टं मम प्रयच्छ अभीष्टं परं देहि। त्वां तत्रभवन्तं भगवन्तं इदमेव भक्तिरूपं वरदानं पुनः पुनः याचे॥श्रीः॥

**राघवकृपाभाष्य**—श्री नारद ने कहा– हे रघुनाथ जी! मैं और कोई वरदान नहीं माँगना चाहता। अब तो आप दोनों श्री सीताराम के चरणारविन्द में मेरी सतत भक्ति बनी रहे। हे नाथ मैं यही प्रिय वरदान माँगता हूँ और आपसे बारम्बार यही माँगता हूँ॥श्री॥

वेदव्यास उवाच—वेदव्यास जी बोले—



**इत्येवमीडितो रामः प्रादात् तस्मै वरान्तरम्।**
**वीररामो महातेजाः सच्चिदानन्दविग्रहः॥८६॥**

**रा०कृ०भा०**—इति एवं अनेन प्रकारेण ईडितः स्तुतिविषयीकृतः वीररामः वीरं परशुरामपि रमयति इति वीररामः अथवा वीराणां रामः आनन्दरो यस्मात् तथाभूतः महातेजाः परमतेजस्वी, सच्चिदानन्द एव विग्रहो यस्य एवं विधोरामः तस्मै नारदाय वरान्तरं अन्यद्वरं अग्रे वक्ष्यमाणं प्रादात् दत्तवान्॥श्रीः॥

**राघवकृपाभाष्य**—श्रीवेदव्यास जी ने युधिष्ठिर से कहा—हे महाराज! नारद जी द्वारा इस प्रकार स्तुति किये जाने पर वीर परशुराम को भी आनन्दित करनेवाले तथा अन्य समरश्लाघियों के आनन्ददाता, परम तेजस्वी, सच्चिदानन्दस्वरूप भगवान श्रीरामजी ने नारद जी को आगे कहे जाने वाले दो वरदान और दिये॥श्री॥



**अद्वैतममलं ज्ञानं स्वनामस्मरणं तथा।**
**अन्तर्धानं जगामाशु पुरतस्तस्य राघवः॥८७॥**

**रा०कृ०भा०**—अद्वैतं विशिष्टाद्वैतं यद्वा द्वाभ्यां स्त्री पुंसाभ्यां इतं जातं इति द्वैतम्। नद्वैतं अद्वैतं जगद्भिन्नं स्त्री पुरुष निरपेक्षजन्मानिम्। अमलं निर्मलं स्वनामस्मरणं रामनामस्मरणं तथा तस्य नारदस्य पुरतः नारदस्य सम्मुखमेव श्रीराघवः आशु शीघ्रमेव अन्तर्धानं ध्यानगम्यतां जगाम अदृश्यो अभवत्॥श्रीः॥

**राघवकृपाभाष्य**–स्त्री पुरुष से जन्म लेने के कारण जीव को द्वैत कहते हैं। किन्तु भगवान् स्त्रीपुरुषनिरपेक्षजन्मा हैं अर्थात् उनका जन्म मिथुनमाध्यम से नहीं होता इसी लिए उन्हें अद्वैत कहा जाता है। इस प्रकार निर्मल विशिष्टाद्वैत ज्ञान, अपने नामस्मरण की निष्ठा, ये दो दिव्य वरदान देकर भगवान् श्रीराघवेन्द्रसरकार नारद जी के सामने ही शीघ्र अन्तर्धान हो गये॥श्रीः॥

❁ **इति श्रीरघुनाथस्य स्तवराजमनुत्तमम्।**
**सर्वसौभाग्यसम्पत्तिदायकं मुक्तिदं शुभम्॥८८॥**

❁ **कथितं ब्रह्मपुत्रेण वेदानां सारमुत्तमम्।**
**गुह्याद् गुह्यतरं दिव्यं तव स्नेहात्प्रकीर्तितम्॥८९॥**

**रा०कृ०भा०**–वेदव्यासः प्राह–हे युधिष्ठिर! इति एवंरूपेण सर्वसौभाग्यसम्पत्तिदायकं सर्वसौभाग्यानां सम्पत्तिः यस्याः सा सर्वसौभाग्य-सम्पत्तिर्भगवद्भक्तिः तां ददाति तथाभूतं सकलसौभाग्य सम्पत्ति भूतभक्तिप्रदातारं वेदानां श्रुतीनां उत्तमं अलौकिकसारं गुह्याद् गुह्यतरं गोपनीयतरं दिव्यं अलौकिकं श्रीरघुनाथस्य श्रीरामस्य अनुत्तमं उत्कृष्टं स्वतराजं ब्रह्मपुत्रेण नारदेन सनकादीन् प्रतिपुनर्ब्रह्मपुत्रेण सनत्कुमारेण वेदव्यासं मां प्रति कथितम् अद्य तव स्नेहात्–विशेषस्नेहात् प्रकीर्तितम् प्रकर्षेण कीर्तनविषयीकृतम्॥श्रीः॥

**राघवकृपाभाष्य**–वेदव्यास जी ने कहा–हे धर्मराज! इस प्रकार सम्पूर्ण सौभाग्यों की सम्पत्तिरूप भक्ति को देने वाले, मुक्ति के दायक, परमकल्याणमय, वेदों के सारभूत, गुह्यातिगुह्य अलौकिक इस श्रीरामजी के स्वतराज को ब्रह्मपुत्र नारद जी ने कहा और उसी को ब्रह्मपुत्र सनत्कुमार ने मुझसे कहा, वही मैंने तुम्हारे स्नेह से यहाँ तुम्हारे समक्ष प्रस्तुत किया है॥श्री॥

❁ **यः पठेच्छृणुयाद्वापि त्रिसन्ध्यं श्रद्धयान्वितः।**
**ब्रह्महत्यादिपापानि तत्समानि बहूनि च॥९०॥**

❁ **स्वर्णस्तेयं सुरापानं गुरुतल्पगतिस्तथा।**
**गोवधाद्युपपापानि अनृतात्सम्भवानि च॥९१॥**

**सर्वैः प्रमुच्यते पापैः कल्पायुतशतोद्भवैः।**
**मानसं वाचिकं पापं कर्मणा समुपार्जितम्।।९२।।**

**श्रीरामस्मरणेनैव तत्क्षणान्नश्यति ध्रुवम्।**
**इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते।।९३।।**

**रा०कृ०भा०**–अथ चतुर्भिः श्लोकैः स्तवराजस्य माहात्म्यं वर्णयति–तिसृणां प्रातर्मध्याह्नसायन्तनीनां सन्ध्यानां समाहारः त्रिसन्ध्यं, श्रद्धया आस्तिकबुद्धया पुंलिंग निर्देशः मनुष्यमात्र विषयः। ब्रह्महत्या ब्राह्मणवधः, पापानि विकर्मजनितफलानि, उपपापानि प्रायश्चित्तेन नाशयितुं शक्यानि कल्याणयुत शतोद्भवैः अनन्तकल्पसम्भवैः सत्यस्यत्रिरुक्तिः विश्वासदृढ़तायै।।श्रीः।।

**राघवकृपाभाष्य**–अब चार श्लोकों में स्वतराज का माहात्म्य वर्णन करते हैं। इस प्रकार से जो नर या नारी, भाई या बहन, श्रद्धापूर्वक इस श्रीरामस्तवराज को तीन बार पढ़ेंगे या श्रवण करेंगे, उनके ब्रह्महत्यादिपाप और उनके समान अनेक और पाप, स्वर्ण का चुराना, शराब पीना, गुरुतल्पगमन, गोवधादि उपपाप और असत्य से उत्पन्न होने वाले सभी पाप इस प्रकार के जो अनेक पाप हैं, जिन्हें व्यक्ति ने अनन्तकल्पों से अर्जित किया है, उन सभी पापों से वह छूट जाता है और मानसिक, वाचिक और कायिक ये सभी पाप श्रीरामजी के स्मरण से एक क्षण में समाप्त हो जाते हैं। यह सत्य है, यह सत्य है, यह सत्य ही है जिसे मैं कह रहा हूँ।

अब तक जो महापाप और उपपाप कहे गये सबका क्षय श्रीरामजी के स्तवराज के पाठ से कहा गया है। यह सत्य है, यह सत्य है, सत्य ही है। वेदव्यास ने यहाँ तीन बार प्रतिज्ञा की है।।श्री।।

**रामः सत्यं परं ब्रह्म रामादन्यन्न विद्यते।**
**तस्माद् रामस्वरूपं हि सत्यं सत्यमिदं जगत्।।९४।।**

**रा०कृ०भा०**–इदानीं भगवान् वेदव्यासः श्रीरामस्तवराजमुपसंहरन् धर्मराजाय युधिष्ठिराय वेदार्थ सारभूतस्य श्रीद्रामस्तवराजस्य सारं संक्षिप्तार्थं निष्कर्षं च निरूपयिष्यमाणः प्राह–एतावता ग्रन्थेन खलु यत्परब्रह्म परमात्मास्वरूपः कोसलभूपः श्रीमद्रामचन्द्रोन्यरूपि मया स एव वेदवेदान्तवेद्यं

सत्यं परं ब्रह्म।

स देव सौम्यमेतदग्र आसीत् इति श्रुतेः। सदेव सत्यम् शाखादित्वात् यः प्रत्ययः। सत्यं नाम त्रिकालाबाधितम्। अर्थात् यस्य रामचन्द्रस्य मया इयता ग्रन्थेन श्रीस्तवराजव्याजेन निरूपणं व्याधायि स तु त्रिकालाबाधितत्वात् सत्यः। भूतवर्तमानभविष्यत्सु सत्यः रामजन्मतोऽपि पूर्वं प्रह्लादादयः श्रीरामस्योपासनां कृतवन्तः। अतएव नृसिंह पुराणे स्वयं प्रह्लादे हिरण्यकशिपुं प्रति प्रावोचत्–

**रामनाम जपतां कुतो भयं सर्वतापशमनैकभेषजम्।**
**पश्य तात मम गात्रसन्निधौ पावकोऽपि सलिलायतेऽधुना।।**

अतएव आद्ये मन्वन्तरे शतरूपया अनुरूपया सहितो भगवान् मनुः स्वायम्भुवः श्रीसीतारामयोरुपासनां विधाय तयोरेव दर्शनं समकार्षीत्। तथा च गोस्वामिपादाः हुलसीहर्षवर्धनाः प्राहुः–

**पद राजीव बरनि नहिं जाहीं। मुनि मम मधुप बसहिं जेहिं माहीं।।**
**बाम भाग सोभति अनुकूला। आदिसक्ति छबिनिधि जगमूला।।**
**जासु अंस उपजहिं गुन खानी। अगनित उमा रमा ब्रह्मानी।**
**भृकुटी बिलास जासु जग होई। राम बाम दिसिसीता सोई।।**

स एव त्रेतायुगे श्रीरामः स एव साम्प्रतमपि रामः यस्य चर्चा क्रियते मया। तवाधिसमं स एव भविष्यत्यपि रामः यस्तावत्कराले कलिकाले तुलसीदास प्रभृतीन भक्तान् निजदर्शनेन कृतार्थयिष्यतीति हार्दम्। रामादन्यज्जगतीतले किमपि न विद्यते। जगदिदमपि श्रीसीता– रामयम्। **'जगत्सर्वं शरीरं ते'** इतिवचनात्। अतएव परिणामिनः सत्यत्वात् परिणामेनापि सत्येन भाव्यम्। जगदिदं भगवतः श्रीरामचन्द्रस्य परिणाम इत्येव वेदान्तहार्दम्। नैव जगदिदं विवर्तः नैव जगदिदं विकारः किन्तर्हि? परिणाम एव। ननु जगतः भगवतः परिणामे परिणामत्वे स्वीकृते ब्रह्मणः निर्विकार विकारापत्तिरिति चेत्? न। तस्यालौकिके सत्यपि प्रभावात् सत्यपि परिणामे विकारानापत्तेः। अतएव वैष्णवा अविकृतपरिणामवादं परमात्मन आमनन्ति। यथा दीपकात् प्रकटितेष्वप्यनेकेषु दीपेषु तत्र निर्विकारत्वमक्षतम्

तथैव भगवतः प्रकटितेष्वनेकेष्वपि जगत्सु तस्य निर्विकारत्वं सुरक्षितमेवेत्यवगन्तव्यम्। यद्वा परमात्मनो विशेषणांशे प्रकृतौ परिणामः। प्रकृतिपरिणामः परमात्मनि उपचर्यते। मूलतः परिणाम्नी प्रकृतिः। उपचारात् परिणामी भगवान् श्रीरामः। अतएव श्रीरामस्वरूपं रामः स्वरूपं शरीरं यस्य तथाभूतमिदं जगत् सत्यम् सत्यम् सत्यमस्ति सत्यमस्ति, नासत्यम्। इत्यनेन दार्शनिक महानुभावकल्पितानां पंचानामपि ख्यातीनां निरासपूर्वकं विशिष्टाद्वैत सम्मतः सत्ख्यातिवादः प्रतिष्ठापितः भगवता सनत्कुमारेण नारदेन वेदव्यासेन च। अत्रेदमवगन्तव्यम् यद् भारतीय दर्शनं द्वेधा आस्तिकं नास्तिकं चेति। आस्तिकदर्शनंषड्धा-सांख्यं, योगो, वैशेषिको, न्यायः पूर्वमीमांसा उत्तरमीमांसा चेति। नास्तिकं दर्शनं त्रेधा-बौद्धदर्शनं जैनदर्शनं चार्वाक् चेति। तत्र आस्तिकदर्शनानां वर्गे ख्यातौ विप्रतिपत्तिः आचार्याणाम्। एवमेव नास्तिक दर्शनेष्वपि। नास्तिकदर्शनेषु तत्र बौद्धाः श्रौत्रान्तिकाः आत्मख्यातिं मन्यन्ते। तेषां मते आत्मानं विज्ञानं तच्च बुद्धिपर्यायम्। अर्थात् बुद्धिरेव भ्रमरूपेण परिणमतीति तेषां हार्दम्। अस्मिन् पक्षे श्रौत्रान्तिकाः वैभाषिकाः विज्ञानवादिनः सहमताः। एवं असत्ख्यातिं मन्यन्ते तत्र बौद्धाः माध्यमिकाः। प्राभाकारस्तु अख्यातिवादं स्वीकुर्वन्ति। वैशेषिकाः नैयायिकाश्च अन्यथाख्यातिमङ्गीकुर्वन्ति। अद्वैतवादिनः शाङ्कराः अनिर्वचनीयां ख्यातिं समामनन्ति। वयं च श्रीमदाद्यरामानन्दाचार्यपदपंकेरुहचञ्चरीकाः श्रीवैष्णवाः सत्ख्यातिवादं मन्यामहे। सत्ख्यातिवाद एवं समर्थ्यते श्रीमद्रामस्तवराजे भगवता नारदेन श्रीसनत्कुमारेण वेदव्यासेन च भगवता। अतएव जगतः सत्यत्वे अत्रद्विरुक्तिः दार्ढ्याय।

**तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत्।**

उपपत्तिश्च तस्मादित्यनेन। यतो हि परिणामी सत्यः अतः परिणामेनापि सत्येन भवितव्यम्। परिणामी तु न भिन्नोभवति तस्मात् रामस्वरूपत्वादेव इदं जगत् सत्यं सत्यं सर्वदैव सत्यम्। नासत्यं न मिथ्या नासत्। यथार्थं सर्वविज्ञानं इति वेदविदां मतम्। वेदविदां महानुभावानां इदमेव मतं यत्सर्वमपि विज्ञानं यथार्थं भवति। किमपि अयथार्थं वर्तत एव नहि। शुक्तौ रजतज्ञानं यथार्थज्ञानं नायथार्थज्ञानम्। पञ्चीकरणप्रक्रियया

सर्वं सर्वत्र विराजते पृथिव्यां अर्धांशः पृथिव्याः, अष्टमश्चांशः शेषाणां चतुर्णाम्। एवं जले अर्धांशः जलस्य शेषाणां चतुर्णां परिशेषे अर्धे अष्टमांशः अष्टमांशः। एवं अग्नौ आग्नेये वस्तुनि अर्धांशः अग्नेः शेषाणां चतुर्णां च अर्धांशसम्मेलनम्। एवमेव वायव्ये अर्धांशःवायोः शेषाणां चतुर्णां च अर्धांशे अष्टमांशः अष्टमांशः। एवं आकाशमये अर्धांशः आकाशस्य शेषाणां चतुर्णां च अर्धांशे अष्टमः अष्टमः अंशः इत्येव तत्रत्या व्यवस्था। यदि सर्वं सर्वत्र भासते तर्हि शुक्तावपि रजतेन भवितव्यम्। यदि शुक्तौ रजतज्ञानं यथार्थज्ञानं तर्हि भ्रमः कथं कथ्यते इति चेत्, व्यवहारानर्हत्वात्। कथं व्यवहारानर्हत्वम्? शुक्तौ रजतज्ञानस्य अल्पत्वात्। शुक्तिज्ञाननिवारणं च कथम्? शुक्तिज्ञानभूयस्त्वे ज्ञाते अल्पत्वाच्चरजतज्ञानस्य बाधो भवति। अतएव गोस्वामिपादाः प्राहुः अन्येषां मते रजतज्ञानं अनिर्वचनीयज्ञानं भवेत्, किन्त्वस्मन्मते रजतज्ञानं शुक्तिज्ञान यथार्थज्ञानम्। भगवतः सत्यतयैव रजतज्ञानं शुक्तौभासते। एवमेव शंखे पीतिमज्ञानमपि यथार्थज्ञानम्। शुक्ले शंखे पीतिमज्ञानं भवति। तत्र पीतिमरोगग्रस्तत्वात् दुष्टनयनपीतरश्मिभिः समभिभूतशुक्लत्वं रजतं पीतं भासते। एवमेव सर्वमपिज्ञानं यथार्थज्ञानम्। व्यवहारानर्हत्वेनैव तत्रभ्रम उपजर्यते इत्येव अस्माकं सिद्धान्तः। स्वप्नज्ञानमपि यथार्थज्ञानम् नायथार्थम्। दिग्भ्रमोऽपि यथार्थ एव सर्वासु दिक्षु सर्वासां दिशां सत्त्वात्। अतएव यस्य कस्यचित्पूर्वं तदेव कस्यचित्पश्चिममपि भवति। तस्मात्सर्वमपि यथार्थं न किञ्चिदपि अयथार्थम्। अतएव श्रीमद्भागवते गर्भस्तुतौ नवकृत्वः सत्यमुच्चार्य जगतः जगत्परिणाम्नो भगवतश्च सत्यत्वं देवैरङ्गीकृतम्—

**सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये।**
**सत्यस्य सत्यं ऋतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः॥**

भगवतः त्रिसत्यं देवतिर्यङ्नरात्मकं सृष्टित्रयं भगवतः सत्यम्। एवम्भूतस्य देवतिर्यङ्मयस्य सत्यस्य जगतः परमार्थत्वेन भगवानेव सत्यम्। सत्यस्य सन्ग्भूतस्य जगतः योनिं ऋतसत्यनेत्रं सत्यात्मकं एवम्भूतं परमात्मानं त्वामहं शरणं वयं देवाः प्रपद्यामहे।

नन्वस्मिन् यथार्थज्ञानप्रतिष्ठापने किं मानमिति चेत्?

श्रुतय एव। तथा च श्वेतकेतुर्नाम अरुणपुत्रः द्वादशवर्षात्मकं ब्रह्मचर्यं

सम्पाद्य पितरं वन्दमानो जिज्ञासमानश्च परब्रह्म पृच्छति–किं तत्त्वं तत् यस्मिन् विज्ञाते सर्वं विज्ञातं भवति? तदा अरुणः कथयति–तत्तु एकमेव तत्त्वम् परब्रह्मात्मकं यस्मिन् विज्ञाते सर्वं विज्ञातं भवति सर्वस्य ब्रह्मभयत्वात्। यदि जगत्ब्रह्मण विवर्तं स्यात् तर्हि ब्रह्मणि विज्ञाते जगतः विज्ञानं न स्यात्। यथा शर्करायां विज्ञातायां जलस्य विज्ञानं न भवति न वा तैले विज्ञाते शर्करा विज्ञाता भवति। नवा शशिनि सम्यग् ज्ञाते सूर्यस्य ज्ञानं जायते न वा सूर्ये विज्ञाते वनस्पतीनां विज्ञानं भवति। तेषां तेषां तत्तत्पदार्थभिन्नत्वात्। किन्तु सम्पूर्णस्य जगतो ब्रह्ममयत्वात् ब्रह्मणि विज्ञाते सर्वं विज्ञातं भवति इत्यनेनैव यथार्थता। यदि ब्रह्म अयथार्थं तर्हि जगदयथार्थम्। यदि ब्रह्म अयथार्थं नास्ति तर्हि जगदपि अयथार्थं नास्तीति राद्धान्तः। तथा च तस्य श्वेतकेतोः जिज्ञासां समादधानो ब्रवीति श्रीमदरुणः–यथा सौम्येन एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, यथा सौम्येकेन लौहमणिना सर्वं लौहमयं विज्ञातं भवति, वाचारम्भणं विकारो नामधेयं लौहमित्येव सत्यम्। यथा सौम्येकेन नखनिकृन्ततेन सर्वं कार्ष्णायसं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं कार्ष्णायसं इत्येव सत्यम्। इति छान्दोग्योपनिषदः षष्ठाध्यायस्य द्वितीयखण्डस्य चतुर्थे। एवमेव एकेनैव विज्ञातेन ब्रह्मणा सर्वं तत्परिणामभूतं जगद् विज्ञातं भवति वाचारम्भणं विकारो नामधेयं विकार कथनं च केवलं वाचरम्मणं वर्तते वस्तुतः विकारो नहि परिणामो वर्तते ब्रह्मणः, न वा विवर्तः इत्यनेन स्वयमेव भगवती श्रुतिः सत्ख्यातिवादं समर्थयन्ती जगत् ब्रह्म परिणामभूतं सारोपं संस्थापयति। किञ्च ब्रह्मसूत्रेऽपि स्वयं भगवान् वादरायणो वेदव्यासः **'परिणामात्'** इत्येवं सूत्रयता जगतो विवर्तवादं खण्डयति। एवं श्रुत्या स्मृत्या च जगतो विवर्तवादं विकारवादं च खण्डयित्वा यथार्थवाद एव प्रतिष्ठाप्यते सत्ख्यातिवाद एव प्रतिष्ठाप्यते। इमामेव प्रतिष्ठापनां समर्थयति श्रीमद्रामस्तवराजोऽपि–

**तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत्।**

यदि जगदसत्यं स्यात् तदा श्रीरामस्वरूपं न स्यात्। यदि श्रीरामस्वरूपं न स्यात् तर्हि जगति जीवस्य स्थितिर्नस्यात्। नहि गत्वे वस्तूनि नित्यस्य वस्तुनः प्रतिष्ठापनं भवति। एवमेष सम्पूर्णज्ञानं यथार्थम्।

किम्बहुना मरुमरीचिकाज्ञानमपि यथार्थम् तत्रापि तेजसः सत्वात्। तस्मात् आत्मख्यातिवादः असत्ख्यातिवादः अख्यातिवादः अन्यथाख्यातिवादः अनिर्वचनीयाख्येदवादः परास्तः इत्येवात्र हार्दम्।

अतएव परमात्मनो जगतश्च सत्यत्वं निश्चित्य तस्मिंश्च श्रद्धया सत्यस्वरूपं परमात्मानं समार्चयन् जीवः मुक्तो भवितुं शक्नोति। ननु यदीदं जगत्सत्यं तर्हि तस्य निन्दा कथम्? सत्यत्वमेव निन्दाभावहेतुरिति नैव कथयितुं शक्यते। यथा विषं सत्यम् किन्त्वपेयम्। तथैव संसारः सत्यः किन्त्वग्राह्यः। भवतु भगवानेव इत्येव अस्माकं राद्धान्तः। अतएव संसारोनाम सम्यक् सारः यस्मिन् सः संसारः। असार इति कथम्? अकारो वासुदेवः स एव सारः यस्मिन् स असारः। दुःखालयत्वात् तस्यासारता न तु असत्सृष्टित्वात्। ननु यदि जगत्सत्यं तर्हि गोस्वामितुलसीदासेन तस्यासत्यता कथं स्वीकृता? व्यवहारानर्हत्वात्। अतएव गोस्वामिपादाः कदापि जगतो मिथ्यात्वं न वर्णयन्ति।

**एहि विधि जग हरि आश्रित रहई।**
**जदपि असत्य देत दुःख अहई।।**

तत्र असत्य शब्दस्य संसारे न विशेषणता। किन्तर्हि? दुःखविशेषणमिदम्। अयं संसारः हरेः आश्रितः सन्नपि असत्यं दुःखं ददातीति तत्रत्यं हार्दम्। अतएव शुक्तौ रजतभ्रमः व्यवहारानर्हत्वेन नत्वसत्यत्वेन। यदि स्वप्नः सत्यं तर्हितत्र मायामात्रमिति कथं न निगदितं ब्रह्मसूत्रे? तत्रत्यः मायाशब्दः लीलापरः मायामात्रं अर्थात् भगवतो लीलामात्रम्। किञ्च भगवती श्रुतिः भगवन्तं सत्यसङ्कल्पं समुद्घोषयति–

**एष हि आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः।**

जगदिदं च सत्यसङ्कल्पस्य भगवतः सङ्कल्पपरिणामभूतम्। सत्यं सङ्कल्पयतीति सत्यसङ्ककल्पः यदि जगदसत्यं तर्हि सत्यसङ्कल्पस्य सृष्टिः कथं स्यात्? सत्यसङ्कल्पो भगवान् असत्यं कथं सङ्कल्पयेत्। **एवं एकोऽहं बहुस्याम प्रजायेय** इत्येव भगवतः सङ्कल्पः। अहम् एकः सन् बहुस्याम प्रजायेय अर्थात् अनेकासुप्रजासु अन्तर्यामिरूपेण विराजमानः सन् प्रजायेय जगज्जायेत अहं

प्रजायेय इत्येव जीवापेक्षया भगवतो वैशिष्ट्यम् इत्यस्मादपि जगतः सत्यत्वभावं स्वीकर्तव्यम्। किञ्च जगतो सत्यत्वे **जगतसर्वं शरीरं ते** इति भगवतो वाक्यं ब्रह्मणः वाल्मीकीय रामायणे स्तुतिरूपेण निगदितं व्याकुप्येत। श्रीमद्भगवद्गीतायामपि जगतः सत्यत्वमेव स्वीक्रियते। भगवान्श्रीकृष्णचन्द्रः जगत्सत्यत्ववादिनो मन्यते ह्यासुरस्वभावम्। तथा च—**आसुरं पार्थ मे शृणु** इति प्रतिज्ञाय भगवान् आसुराणां लक्षणं वर्णयन् प्राह—

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम्।।**

अर्थात् आसुरस्वभावाः जगत् असत्यं कथयन्ति जगत्प्रतिष्ठाशून्यं कथयन्ति जगदनीश्वरं कथयन्ति। अपरस्परसम्भूतं जगत् मन्यन्ते। वस्तुतस्तु जगत्सत्यम्, जगत्सत्प्रतिष्ठं जगत्सेश्वरं च इत्यनेनापि ब्रह्मास्त्रेण जगदसत्यत्ववादिनः परास्ताः। किञ्च यदि जगदसत्यंस्यात् तर्हि कथं स्यात् परमात्मा भगवान् जगन्नाथः? न खलु असत्यस्य जगतः कोऽपिनाथो भवति। यतो हि भगवान् जगन्नाथः जगदीशः तस्मात् जगत् सत्यम्। ननु भगवतो जगन्नाथत्वे किं प्रमाणमिति चेत्? श्रुतयः स्मृतयश्चेति गृहाण। तथा च श्रुतिः— **द्यावाभूमी जययन्देव एकः।**

एवं स्मृतिरपि—

**प्रोद्यमाने जगन्नाथं सर्वलोक नमस्कृतम्।**
**कौसल्याजनयद्रामं दिव्यलक्षण संयुतम्।।**

किञ्च असत्यत्वे जगतः तस्य मातृत्वं पितृत्वं च भगवति कथं संगच्छेत्? कथं भगवान् असत्यस्य जगतः माता भ्राता पितामहो वा भवितुं शक्नोतु? तथा चोक्तम् श्रीमद्भगवद्गीतायाम्—

**पिताहमस्य जगतो माता भ्राता पितामहः।**
**वेद्यं पवित्रमोंकारं ऋक्सामयजुरेव च।।**

यतो हि भगवान् जगतोऽस्य माता, भ्राता पितामहः तस्मादपि जगत्सत्यम्। किञ्च यदि जगदसत्यमभविष्यत् तदा तस्मिन्नसत्यभूते जगति परमात्मा कथं अवातरिष्यत्। किमसत्ये जगति सत्यस्वरूपः परमात्मा

अवतरति? किमसत्ये आकाशपुष्पे कश्चित्सुरभिव्यवहारं कर्तुं पारयेत्। यतो हि भगवतो अवतारो जगति तस्मादपि जगत्सत्यम् भगवतो धामभूतम्॥श्रीः॥

**राघवकृपाभाष्य**–अब महर्षि वेदव्यास चौरानवें श्लोक में श्रीरामस्तवराज का उपसंहार करतेहुए उसके सारांश, संक्षिप्तार्थ तथा निष्कर्ष का व्याख्यान करते हैं।

परब्रह्म परमात्मा श्रीराम ही सत्य हैं। उनके अतिरिक्त यहाँ कुछ भी नहीं है। इसीलिए, अर्थात् जगत् श्रीरामस्वरूप है, श्रीराम का शरीर है, इसलिए यह सत्य है, सत्य है, अर्थात् सर्वथा सत्य है। जगत् असत्य हो ही नहीं सकता। तात्पर्य यह है कि भगवान् श्रीराम तीनों काल में विराजमान हैं। क्योंकि सत्य उसी को कहते हैं जो तीनों काल में विराजमान रहता है–**तदेव सत्यम्।** सत् ही सत्य है। यहाँ सत् शब्द से स्वार्थ में शाखादित्वात् 'य' प्रत्यय हुआ है। और 'भ' संज्ञा होने के कारण जश्त्व नहीं हुआ।

श्रीरामजन्म के पूर्व में भी श्रीराम विराजमान थे इसीलिए तो रामावतार से बहुत पहले श्री प्रह्लाद जी ने श्रीराम की ही उपासना की। और जनश्रुति भी है कि प्रह्लाद कहते हैं–

**हम में तुम में खड्ग खम्भ में घट घट व्यापक राम।**

नृसिंहपुराण में भी प्रह्लाद कहते हैं–हिरण्यकशिपु ने जब पूछा कि तुम किस प्रक्रिया के आधार पर जलती हुई अग्नि में रहकर भी नहीं जले तब प्रह्लाद ने उत्तर दिया–सम्पूर्ण पापों को नष्ट करने के लिए जो एकमात्र औषधि हैं ऐसे श्रीराम नाम के जप से श्रीराम नाम का जप करने वालों को किससे भय हो सकता है? हे असुरेन्द्र! देखिये श्रीरामनाम के जप के प्रभाव से इस समय अग्नि भी मेरे सामने चन्दन के समान शीतल हो रहा है अथवा गंगाजल के समान शीतल हो रहा है। इससे भी सिद्ध हो जाता है कि श्रीराम सत्य हैं। वेदव्यास कहते हैं–रामावतार के पहले भी श्रीराम थे, रामावतार काल में तो कोई सन्देह ही नहीं, इस समय भी श्रीराम हैं और कलियुग आदि में भी श्रीतुलसीदास प्रभृति कोटि कोटि महापुरुषों को अपने दर्शनों से श्रीराम जी कृतार्थ करेंगे। चूँकि श्रीराम सत्य हैं इसीलिए उन्हीं का

स्वरूप होने के कारण यह जगत भी सत्य है, सत्य है, यह कभी असत्य होता ही नहीं। **'सत्यं सत्यमिदं जगत्'** इस उक्ति से गोस्वामी तुलसीदास जी ने भारतीय दर्शन में स्वीकृत पाँच ख्यातियों का निरसन करके अपनी विशिष्टाद्वैतसम्मत एवं श्रीरामानन्दीय श्री वैष्णवों को अभिमत सत्ख्यातिवाद का ही समर्थन किया है। ख्याति शब्द दर्शन में भ्रम के अर्थ में प्रयुक्त होता है। सौत्रान्तिक वैभाषिक बौद्धों का यह मत है कि हमारी बुद्धि ही भ्रम के रूप में हमारे सामने प्रकट हो जाती है। यों अन्य माध्यमिक बौद्धों का मत है कि 'असत्' अर्थात् हमको असत् भास होता रहता है। प्राभाकरों का मत है-'अख्याति' अर्थात् हमको भ्रम ही नहीं होता। और वैशेषिकों का मत है कि हमको अन्यथा ख्याति होती है। दूसरे में दूसरे का भान हो जाता है। और अद्वैती महानुभावों का मत है कि हमको जो भ्रम होता है, वह अनिर्वचनीय होता है। उसे सत् भी नहीं कह सकते और उसे असत् भी नहीं कह सकते। यदि सत् होता तो उसका बोध न होता और यदि वह असत् होता तो उसकी प्रतीति न होती क्योंकि बोध भी हो रहा है और प्रतीति भी नहीं हो रही है, इसलिए वह एक अनिर्वचनीयाख्याति हमको प्रतीत होती है। उसको सत् या असत् हम कुछ भी नहीं कह सकते। परन्तु यहाँ विशिष्टाद्वैती महानुभावों ने यह सिद्ध किया कि यह सब कुछ नहीं। हमको जो कुछ ज्ञान होता है वह सत् ज्ञान ही होता है। हमारी प्रतीति निरन्तर सत्य है, असत्य होती ही नहीं। इसीलिए कहा जाता है कि-

**यथार्थं सर्वविज्ञानमिति वेदविदां मतम्।**

वेदवेत्ता महानुभावों का यह मानना है कि जो कुछ भी यहाँ ज्ञात हो रहा है, वह सब यथार्थ है। अयथार्थ नहीं। सत्य है, असत्य नहीं। जो हमको शुक्ति में रजत का भ्रम होता है, वह भी सत्य है। क्योंकि पञ्चीकरण प्रक्रिया के अनुसार सब कुछ सर्वत्र सबमें रहता है। जैसे-जो पार्थिव पदार्थ होते हैं, घट पटादि उनमें आधाअंश तो पृथ्वी का होता है और आधे अंश में आठवाँ अंश जल, अग्नि, वायु और आकाश का रहता है। इसी प्रकार जलीय पदार्थ में आधा अंश जल का होता है और आधे में आठवाँ अंश पृथ्वी, अग्नि, वायु और आकाश का होता है। इसी प्रकार आग्नेय पदार्थ में

आधा अंश अग्नि का होता है और आधे में पृथ्वी, जल, वायु और आकाश का आठवाँ आठवाँ अंश होता है। इसी प्रकार वायव्य पदार्थ में भी आधा अंश वायु का होता है और आधे में आठवाँ आठवाँ अंश पृथ्वी, जल, तेज और आकाश का होता है। इसी प्रकार आकाशीय पदार्थ में आधा अंश आकाश का होता है और आधे में पृथ्वी, जल, तेज, वायु का आठवाँ आठवाँ अंश होता है। इस प्रकार पञ्चीकरण प्रक्रिया के अनुसार जब सब कुछ सब में रहता ही है तो शुक्ति में भी रजत का अंश अर्थात् तेजोंऽश रहता है। और उसमें प्रतीति होना कोई असत्प्रतीति नहीं है। वह भी सत्प्रतीति है। यदि कहें कि यदि सत्प्रतीति है तो उसे भ्रम क्यों कहा जा रहा है? इसका उत्तर यह है चूँकि वह अल्प होने के कारण व्यवहारार्ह नहीं है अर्थात् वहाँ पार्थिव अंश आधा है और आधे का यहाँ आठवाँ केवल तेज अंश है अर्थात् सोलह आने में दो आना तेजोंऽश होने के कारण वहाँ उससे आभूषणादि की रचना नहीं की जा सकती इसलिए वह भ्रम है। यहाँ भ्रम का अर्थ है व्यवहारानर्हत्व। **व्यवहारानर्हत्वं भ्रमत्वम्। सत्यज्ञानविषयत्वं यथार्थज्ञानत्वम्।** इसी प्रकार स्वप्न भी सत्य होता है। वहाँ प्रथमपुरुषः सृजति शुद्धि के आधार पर उसमें भी असत्य कल्पना नहीं कर सकते। क्योंकि भगवान् जीव के कर्मोपभोग के अनुसार उसकी स्वप्नावस्था के लिए ही उस शरीर का निर्माण करते हैं, जिसमें वह पुण्यात्मा होगा तो सुखानुभव करेगा और पापात्मा होगा तो उसे दुःखानुभव होगा। जिस प्रकार जाग्रत अवस्था में भगवान के द्वारा जीव के लिए शरीर का निर्माण किया जाता है, सारे संसार का निर्माण कियाजाता है, उसी प्रकार स्वप्नावस्था में भी जीव के लिए भगवान उसके शरीर का निर्माण करते हैं। इसी प्रकार शंख में पीलेपन का ज्ञान भी असत्य नहीं, सत्य ही है। क्योंकि पीलिया होने के पश्चात् व्यक्ति के नेत्र में पीलापन आ जाता है और वही पीतिमा शंख की शुद्धता को बता देती है। इसलिए वहाँ उसको पीला दिखता है। इसीलिए गोस्वामी जी ने स्पष्ट कहा कि यहाँ जो कुछ हो रहा है, वह अपना भ्रम है और लोग भगवान पर आरोपित करते हैं।

**नयन दोष जब जा कहँ होई। पीत बरन ससि कहुँ कह सोई।**
**जब जेहि दिसि भ्रम होइ खगेसा। सो कह पच्छिम उयउ दिनेसा।**
**नौकारूढ़ चलत जग देखा। अचल मोह बस आपुहि लेखा।**

इसलिए यहाँ सब कुछ यथार्थ है कोई वस्तु अयथार्थ नहीं है। क्योंकि जब सब कुछ भगवान् का शरीर है तो उसे यथार्थ होना ही चाहिए। **यस्य पृथ्वी शरीरम्, यस्य आकाशः शरीरम्, यस्य अग्निः शरीरम्, यस्य वायुः शरीरम्, यस्यात्मा शरीरम्** इस प्रकार श्रुतियों ने कहा है। यदि यह सारा संसार प्रभु का शरीर है तो असत्य हो भी नहीं सकता–**जगत्सर्वं शरीरं ते।**

श्रीमद्वाल्मीकीयरामायण में ब्रह्माजी कहते हैं–हे प्रभो! यह सारा संसार आपका शरीर है। सत्यस्वरूप भगवान का शरीर असत्य कैसे होगा? जहाँ जगत को असत् कहा गया है, वहाँ उसका अर्थ है अकारे वासुदेवेसीदतीति असत् अर्थात् जो भगवान में ही विराजमान रहता है, उसे असत् कहते हैं। यहाँ यह शंका हो सकती है कि यदि जगत् सत्य है तो फिर श्रीरामचरित मानस में गोस्वामी जी ने जगत को असत्य क्यों कहा?

**एहि बिधि जग हरि आश्रित रहई। जदपि असत्य देत दुःख अहई।।**

इसका उत्तर यह है कि यहाँ असत्य शब्द जगत् का विशेषण नहीं प्रत्युत दुःख का विशेषण है। अर्थात् जगत् यद्यपि भगवान के आश्रित रहता है फिर भी यह व्यक्ति को असत्य दुःख देता है। यहाँ दुःख में असत्यता है न कि जगत् में।

जैसा कि हम कह चुके हैं कि रस्सी में सर्प की प्रतीति भी सत्य प्रतीति है क्योंकि रस्सी भी पार्थिव अंश है और सर्प भी पार्थिव अंश है। हाँ सर्प की अधिकता के न होने के कारण वह किसी को काट नहीं सकती। इसलिए तो जो भी प्रतीतियाँ होती हैं वे सत्य ही होती हैं। क्योंकि सम्पूर्ण जगत्यदि परमात्मा की सृष्टि है तो असत्य हो ही नहीं सकती। भगवान् झूठे जगत् की रचना नहीं करते। यदि जगत् को झूठा मान लिया जाय तो गंगा आदि सभी नदियाँ झूठी हो जायेंगी। सभी तीर्थ असत्य हो जायेंगे। सम्पूर्ण वेदकी मर्यादा का अपलाप हो जायेगा। इसीलिए भगवती श्रुति ने विवर्तवाद और

विकारवाद का खण्डन करके जगत् के परिणामवाद का समर्थन किया है। अर्थात् यह जगत परमात्मा का परिणाम है। छान्दोग्योपनिषद् के छठे अध्याय के द्वितीय खण्ड में एक आख्यायिका आती है। श्वेतकेतु को जब अरुण ने गुरुकुल में जाकर वेदाभ्यास करने की आज्ञा दी और गुरुकुल में जाकर श्वेतकेतु ने बारह वर्ष पर्यन्त ब्रह्मचर्य का पालन करके वेद का अभ्यास किया। वे लौटे तो ऐसा लगा मानों वे सर्वज्ञ होकर लौट रहे हैं। पिता ने कहा–पढ़े हो, कुछ सुनाओ। वे सबकुछ सुनाने लगे। पिता ने पूछा–क्यों वत्स! क्या तुम वह रहस्य जानकर आये हो जिसके जानने से सब कुछ ज्ञान हो जाय। श्वेतकेतु ने कहा–नहीं पितश्री। कृपा करके मुझे आप ही उपदेश दें। फिर उन्होंने बारह वर्ष ब्रह्मचर्य के आचरण की आज्ञा दी। और श्वेतकेतु बारह वर्ष पर्यन्त, ब्रह्मचर्य का आचरण करके फिर उपस्थित हुए। तब अरुण ने बताया–बेटे! सौम्य! जिस प्रकार एक मिट्टी के पिण्ड के ज्ञान से सम्पूर्ण मिट्टी द्वारा रचित पदार्थों का ज्ञान हो जाता है। यह मिट्टी का विकार है, यह कहना वाणी का विलास मात्र है। वास्तव में यह मृत्तिका ही सत्य है। यह मिट्टी ही है केवल उसका अवस्थान्तरण हो गया है। जिस प्रकार एक छोटी सी लौहमणि के ज्ञान से सम्पूर्ण लौहपदार्थों का ज्ञान हो जाता है। यह कनक है, यह कुण्डल है, यह कहना केवल वाणी का विलासमात्र है अन्तोगत्वा वह सोना ही है। जिस प्रकार एक नखनिकृन्तन अर्थात् नहरनी के ज्ञान से सम्पूर्ण लोहे का ज्ञान हो जाता है और यह नहरनी है यह कहना केवल विकार है, वास्तव में वह लोहा ही है। इसी प्रकार एक परमात्मा के ज्ञान से सारे संसार का ज्ञान हो जाता है। क्योंकि जगत् परमात्मा का परिणाम है। इसे श्रुति के द्वारा स्पष्ट कर दिया गया। जगत् परमात्मा का विवर्त नहीं हो सकता। यदि जगत् परमात्मा का विवर्त होता तो परमात्मा के ज्ञान से जगत् का ज्ञान न होता। और यहाँ श्रुति परमात्मा के जानने से ही जगत् के ज्ञान को स्वीकार रहीं है। इसलिए निश्चित हो जाता है कि यह जगत् परमात्मा का परिणाम है। यहाँ यह शङ्का हो सकती है कि यदि जगत् परमात्मा का परिणाम है तो उसमें विकार होना चाहिए। इसका उत्तर यह है कि परमात्मा की ऐश्वर्यशक्ति के द्वारा उनमें विकार का आगमन नहीं

करने दिया जाता क्योंकि परमात्मा जगत् को रचकर भी निर्विकार होते हैं। जैसे दीपक से दीपक प्रकट करने पर भी दीपक में कोई विकृति नहीं आती। इसीलिए जगत् की सत्यता का समर्थन करते हुए स्वयं श्रीमद्भागवतम् के दशम स्कन्ध के द्वितीय अध्याय के छब्बीसवें श्लोक में गर्भस्तुति प्रकरण में देवता नौ बार जगत के सत्यत्व की प्रतिज्ञा करते हैं—

**सत्यव्रतं सत्यपरं त्रिसत्यं सत्यस्य योनिं निहितं च सत्ये।**
**सत्यस्य सत्यं ऋतसत्यनेत्रं सत्यात्मकं त्वां शरणं प्रपन्नाः।।**

इसलिए जगत् की सत्यता में कोई सन्देह ही नहीं है। यदि जगत् असत्य होता तो भगवान् का अवतार कहाँ होता। क्या असत्य जगत् में भगवान अवतार लेते हैं? स भगवान् कुत्र प्रतिष्ठते? स्व महिम्नि। वे भगवान अपनी महिमा में ही विराजमान होते हैं। इसलिए असत्य जगत् में सत्यस्वरूप परमात्मा के अवतार का प्रश्न ही नहीं उठता। भगवान को श्रुति ने सत्यकाम, सत्यसङ्कल्प कहा है। भगवान ने सङ्कल्प करके इस जगत् की रचना की है। **एकोऽहं बहु स्याम प्रजायेय।** मैं अकेला हूँ इसलिए अब मैं बहुत हो जाऊँ। अर्थात् अनन्त जीवों के शरीरों की रचना करके प्रत्येक जीव के साथ अन्तर्यामी रूप में स्थित हो जाऊँ इसी सङ्कल्प से भगवान ने जगत् की सृष्टि की है। तो क्या सत्यसङ्कल्प भगवान असत्य जगत् की सृष्टि करेंगे। किम्बहुना, यदि यह जगत् असत्य होता तो भगवान इसके नाथ क्यों बनते? क्या असत्य जगत् के भगवान नाथ बनेंगे? यदि भगवान असत्य जगत् के नाथ हैं तो उन्हें जगत् का नाथ कैसे कहा जा रहा है। चूँकि भगवान को जगत् का नाथ कहा गया है। वाल्मीकीय रामायण में—

**प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम्।**

महर्षि वाल्मीकि कहते हैं कि कौसल्याजी ने जगत् के नाथ को उत्पन्न किया। असत्य जगत् के भगवान ईश्वर नहीं हो सकते। चूँकि वे जगदीश्वर हैं इसलिए जगदीश्वर का जगत् भी सत्य है। **लोको तु लीला कैवल्यम्।** ब्रह्मसूत्र में कहा गया है कि जगत् का निर्माण भगवान की लीला है। क्या भगवान असत् की लीला करते हैं? भगवान की लीला भी सत् होती है। भगवान का प्रत्येक कार्य सत् होता है। भगवान का प्रत्येक चरित्र सत् होता

है, असत्य हो ही नहीं सकता। यदि जगत् असत्य होता तो उस असत्य जगत् के भगवान मातापिता कैसे बनते? क्या सत्यस्वरूप परमात्मा असत्यपुत्र को उत्पन्न करते हैं?

**पिताहमस्य जगतो माता धाता पितामहः।**
**वेद्यं पवित्रमोंकारं ऋक्सामयजुरेव च।।**

इसलिए भी जगत् को असत्य कहना सर्वथा अनुचित है। भगवान श्रीकृष्ण ने स्वयं जगत् को असत्य कहने वालों के लिए आसुर शब्द का प्रयोग किया। अर्थात् जो जगत् को असत्य कहते हैं वे असुर होते हैं। राक्षसी प्रकृति के होते हैं। भगवान् श्रीकृष्ण गीताजी के सोलहवें अध्याय में छठे श्लोक से आसुरभाव के निरूपण की प्रतिज्ञा करते हैं–

**दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु।**

उस प्रकरण में भगवान सोलहवें अध्याय के आठवें श्लोक में कहते हैं कि असुर लोग ही जगत् को असत्य और अप्रतिष्ठ मानते हैं। और वे ही लोग जगत् को ईश्वरविहीन तथा अपरस्परसम्भूत एवं केवल कामहैतुक अर्थात्

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम्।।**

यहाँ भगवान ने स्पष्ट कर दिया कि जगत् को असत्य कहना अपने में आसुरभाव को लाना है।

**तस्माद्रामस्वरूपं हि सत्यं सत्यमिदं जगत्।**

यदि जगत् असत्य है तब तो फिर गंगादि दिव्य नदियाँ भी असत्य हैं। सब कुछ असत्य है। असत्य में व्यवहार हो ही नहीं सकता। चूँकि सत्य मय जगत् में व्यवहार हो रहा है इसलिए जगत् की सत्यता निर्विवाद है। इस निर्विवाद सत्यता को सिद्ध करने के लिए भगवान वेदव्यास जी ने श्रीरामस्तवराज में भी कह दिया कि **सत्यं सत्यमिदं जगत्।**

जैसा कि हम कह चुके हैं आत्मख्याति, असत्ख्याति, अख्याति, अन्यथाख्याति और अनिर्वचनीय ख्याति, इन पाँचों में से एक भी ख्याति

विशिष्टाद्वैतदर्शन को मान्य नहीं है। वह सत्ख्याति मानता है। वह कहता है यह प्रजा सन्मूलक है, सत्प्रतिष्ठ है सदायतन है–सन्मूलाः, सत्प्रतिष्ठाः, सदायतमाः। जिसका आयतन सत् है, जिसका मूल सत् है, जिसकी प्रतिष्ठा सत् है, वह परमात्मा असत् सृष्टि की रचना क्यों करेगा? एतावता, जगत् का श्रीसीताराम का परिणाम जानकर हमें उसकी सेवा करनी चाहिए–

**सो अनन्य जाके असि मति न टरइ हनुमन्त।**
**मैं सेवक सचराचर रूप स्वामि भगवन्त।**

भगवान असत्य जगत् की सृष्टि नहीं कर सकते, भगवान असत्यजगत् से विशिष्ट नहीं हो सकते और भगवान असत्य जगत् के सम्बन्धी भी नहीं हो सकते। इसीलिए यह जगत् पूर्णतया सत्य है और यह परमात्मा में ही प्रतिष्ठित है। इसी सिद्धान्त का वर्णन करते हुए यहाँ सनत्कुमार जी कहते हैं–**तस्माद् रामस्वरूपं हि सत्यं सत्यमिदं जगत्।**

यह जगत् श्रीराम के स्वरूप में होने से सत्य है। गोस्वामी जी ने इस तथ्य को पूर्णतया स्वीकारा है। वे यही कहते हैं कि चन्द्रमा में जो पीली प्रतीति हो रही है वह भी सत्य प्रतीति है। वहाँ पीलियाग्रस्त व्यक्ति के नेत्र में जो पीतिमा आ गई है वही पीतिमा चन्द्रमा में उपस्थित होती है और वही उसमें प्रतीत हो जाती है। किसी को भी जब दिग्भ्रम होता है वह भी सत्य है क्योंकि सभी दिशाएँ सभी दिशाओं में रहती हैं। इसलिए विशिष्टाद्वैतमें दिशा को कोई अतिरिक्त पदार्थ नहीं माना गया है। अवातचक्र में भी भ्रमण की प्रतीति उसकी गति की शीघ्रता के कारण होती है। द्विचन्द्र की प्रतीति हमको सामग्री के द्वित्व के कारण हो जाती है। इसलिए यहाँ जो कुछ प्रतीत हो रहा है-वह सत्य प्रतीत हो रहा है। उसे भ्रम तब कहते हैं जब हमारे व्यवहार के वह अनुकूल नहीं होता। और प्रम तब कहते हैं जब हमारे व्यवहार के अनुकूल हो जाता है। किञ्च, जगत् एक व्यवहार का केन्द्र है और व्यवहार असत्य में नहीं होता। लोगों के कहने से कुछ नहीं होता। यदि व्यवहार असत्य में होता तो क्या कोई शून्य शृंग से बाजा बना सकता है? क्या कोई वन्ध्या के पुत्र से पानी मँगाकर पी सकता है। क्या कोई कच्छपी के दूध से नहा सकता है? क्या कोई खरगोश के सींग का धनुष बाण बना

सकता है? क्या कोई आकाश के पुष्प से किसी की पूजा कर सकता है? जब कि हम संसार में तो सारे व्यवहार ही कर रहे हैं? यदि संसार व्यवहारार्ह है तो वह निश्चित सत्य है, असत्य नहीं है। इसलिए हमको भी परमात्मा के सत्य स्वरूप की कल्पना करते हुए जगत् में परमात्मा के दर्शन करते हुए उसकी निष्काम भाव से सेवा करनी चाहिए। यदि जगत् असत्य होता तो भगवान उसे अपने अवतार की भूमि क्यों बनाते? क्या भगवान असत् में अवतरित होंगे? चूँकि भगवान अयोध्या आदि दिव्य स्थानों पर अवतार लेते हैं अतः भगवदवतारभूमि होने से भी यह जगत् सत्य है असत्य नहीं। चूँकि यह भगवान का धाम है और जो भगवान का धाम है, तो भगवान का धाम असत्य हो ही नहीं सकता। असत् में भगवान रह ही नहीं सकते।

वेद ने बारम्बार यही कहा है कि यह संसार भगवान का कार्य है। कार्य कारण में विराजमान रहता है। इसी प्रकार यह जगत् भगवान में विराजमान रहता है। **मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव**। जैसे सूत्र में मणि पिरोई रहती हैं, उसी प्रकार यह संसार भगवान में पिरोया हुआ है। भगवान आनन्दकन्द प्रभु जो स्वयं सत्यस्वरूप हैं, उनमें असत्य जगत् कैसे पिरोया जा सकेगा? इसलिए भी जगत् की सत्यता स्वीकार कर लेनी चाहिए। और इसी सिद्धान्त के आधार पर विशिष्टाद्वैतियों ने सत्ख्यातिवाद कहा और इसी का समर्थन इस रामस्तवराज में किया गया।

**तस्माद् रामस्वरूपं हि सत्यं सत्यमिदं जगत्।**

अर्थात् जगत् पूर्णतया सत्य है और परमात्मा भी सत्य हैं। जगत् को परमात्मा का ही स्वरूप जानकर हमें उसकी सेवा करनी चाहिए। दीन हीन विकलाङ्गों के प्रति सहानुभूतिपूर्वक अपना औदार्य प्रदर्शित करना चाहिए। यही इस स्तोत्र का निष्कर्षार्थ है॥श्री॥

श्री सूत उवाच–श्रीसूत जी बोले



**श्रीरामचन्द्र रघुपुंगव राजवर्य राजेन्द्र राम रघुनायक राघवेश।**
**राजाधिराज रघुनन्दन रामभद्र दासोऽहमद्य भवतः शरणागतोऽस्मि॥९५॥**

**रा०कृ०भा०**–श्रीरामचन्द्र, रघुपुंगव, रघुश्रेष्ठ राजवर्य, राजश्रेष्ठ,

राजेन्द्र, राम, हे रघुनायक हे राघवेश, राजाधिराज, रघुनन्दन, रामभद्र एवं नामोच्चार्य अहं तवदासः अद्य भवतः शरणागतः अस्मि। अत्र भगवानः नवभिः नामभिः नवधा भक्तिपूर्वकं शरणागतिः स्वीक्रियते। अत्र वसन्ततिलकावृत्तम्॥श्रीः॥

**राघवकृपाभाष्य**–हे श्रीरामचन्द्र, हे रघुपुंगव, हे राजाओं में श्रेष्ठ, हे राजेन्द्र, हे राम, हे रघुओं के नायक, हे राघवों के ईश्वर, हे राजाधिराज, हे रघुओं को आनन्दित करनेवाले, हे रामभद्र मैं आपका दास आज आपका शरणागत हूँ। यह वसन्ततिलकावृत्त है॥श्री॥

एवं शरणागतिप्रतिज्ञानान्तरं पंचभिः श्लोकैः भगवन्तं स्तुवन्। अर्थपंचकं पंचसंस्कारांश्च स्मरति। तत्र प्रथमं शार्दूलविक्रीडितम्

❁ **वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे**
**मध्ये पुष्पकमासने मणिमये वीरासने संस्थितम्।**
**अग्रे वाचयति प्रभंजनसुते तत्त्वं मुनीन्द्रैः परं**
**व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम्॥९६॥**

**रा०कृ०भा०**–सुरद्रुमतले हैमे मणिमये महामण्डपे मध्ये पुष्पके आसने वीरासने संस्थितं अग्रे प्रभंजनसुते परमतत्वं वाचयति सति मुनीन्द्रैः व्याख्यातं भरतादिभिः परिवृतं वैदेहीसहितं श्यामलं रामं भजे इत्यन्वयः।

सुरद्रुमः कल्पवृक्षः तस्य तले हैमे हेम्ना निर्मिते अनुकम्पितानि पुष्पाणि पुष्पकाणि तेषां मध्ये इति मध्ये पुष्पकम् पारेमध्ये षष्ठ्या वा इत्यव्ययीभावसमासः। मणिमये मणिप्रचुरे आसने सिंहासने वीरासने वीरासनमुद्राया। वीरासने इति सप्तम्यर्थे तृतीया संस्थितम् विराजमानं अग्रे तस्य पुरतः प्रभंजनस्य वायोः सुते हनुमति वाचयति परमतत्वं वाचयति मुनीन्द्रैः विश्वामित्रवसिष्ठाद्यैः परं तत्त्वस्वरूपं व्याख्यातं व्याख्याविषयीकृतं भरतादिभिः भरतलक्ष्मणशत्रुघ्नैः परिकरैः भ्रातृभिरन्यैश्च परिकरैः परिवृतं वैदेह्या सीतया सहितं एवम्भूतं श्यामलं श्यामलवर्णं श्रीराममहं भजे॥श्रीः॥

**राघवकृपाभाष्य**–कल्पवृक्ष की सुन्दर छाया में, स्वर्णनिर्मित श्रेष्ठ महामण्डप में दिव्य नन्दनवन के पुष्पों के बीच में मणिमय सिंहासन पर

वीरासन की मुद्रा में विराजमान एवं उन्हीं के समक्ष हनुमानजी के द्वारा श्रीराम नाम का दिव्य प्रवचन कीर्तन कराये जाते रहने पर मुनियों द्वारा परमतत्त्व से जिनकी व्याख्या की गई है ऐसे भरत लक्ष्मण शत्रुघ्नादि भ्राताओं एवं जाम्बवान् आदि विज्ञ परिकर सखाओं से परिवृत घिरे हुए श्रीजानकी जी सहित विराजमान श्यामल वर्णवाले भगवान् श्रीराम का मैं भजन करता हूँ।।श्री।।

**रामं रत्नकिरीटकुण्डलयुतं केयूरहारान्वितं**
**सीतालंकृतवामभागममलं सिंहासनस्थं विभुम्।**
**सुग्रीवादि हरीश्वरैः सुरगणैः संवेव्यमानं सदा**
**विश्वामित्र पराशरादि मुनिभिः संस्तूयमानं प्रभुम्।।९७।।**

**रा॰कृ॰भा॰**—अत्रापि भजे इति अनुवर्तते। रत्नकिरीट कुण्डलयुतं केयूरहारान्वितं सीतालङ्कृतवामभागममलं सदा सिंहासनस्थं विभुं सुग्रीवादि हरीश्वरैः सुरगणैः सदा संसेव्यमानं विश्वामित्रपराशरादिमुनिभिः संस्तूयमानं प्रभुं रामं भजे।

रत्नजटित किरीटेन कुण्डलाभ्यांयुतं केयूरोबाहुभूषणं हारः कण्ठभूषणं ताभ्यां केयूरहाराभ्यां अन्वितं, सीतया जनकनन्दिन्या अलंकृतः सुशोभितः वामभागः सव्यभागो यस्य तथाभूतं, अमलं निर्विकारम्, सिंहासनस्थं सिंहासने तिष्ठतीति सिंहासनस्थस्तं सिंहासनस्थं विभुं सर्वव्यापकं सुग्रीवादिहरीश्वरैः सुग्रीवादयो ये हरीश्वराः ज्येष्ठवानरास्तैः सुरगणैः इन्द्रादिदेवैश्च सदा निरन्तरं संसेर्वव्यमानं सेवाविषयं क्रियमाणं विश्वामित्रपराशरादिमुनिभिः विश्वामित्रः पराशरो विश्वामित्रपराशरौ तौ आदी येषां ते विश्वामित्रपराशरादयः ते च ते मुनयः तैः संस्तूयमानं सततं संकीर्त्यमानं प्रभुं सर्वसमर्थं राममहं भजे।।श्रीः।।

**राघवकृपाभाष्य**—रत्नजटित किरीटकुण्डल से युक्त केयूर बाहुभूषण हार कण्ठभूषण इन दोनों आभूषणों से अन्वित तथा सीताजी के द्वारा जिनका वामभाग सुशोभित है ऐसे निर्विकार, सिंहासन पर विराजमान, सर्वव्यापक, सुग्रीवादि श्रेष्ठवानरों और देवताओं के द्वारा जिनकी निरन्तर

सेवा की जा रही है और विश्वामित्र पराशरादि मुख्य मुनियों [illegible] निरन्तर स्तुति की जा रही है, ऐसे सर्वैश्वर्यसम्पन्न सकलसौन्द[illegible] श्रीराघवेन्द्रसरकार श्रीरामभद्र का मैं निरन्तर भजन करता हूँ॥श्री॥

मालिनीद्वयेन भगवन्तं स्तुवन् नारदः तस्मै दिव्यमाल्ये समुपाहरति।

**सकलगुण निधानं योगिभिः स्तूयमानं**
**भुजविजितसमानं राक्षसेन्द्रादिमानम्।**
**महित वृषभयानं सीतया शोभमानं**
**स्मर हृदयविमानं ब्रह्म रामाभिधानम्॥९८॥**

**रा०कृ०भा०**–सकलानां सौन्दर्यादीनां गुणानां निधानं कोशरूपं योगिभिः सनकादिभिः स्तूयमानं संकीर्त्यमानं भुजाभ्यां विजिताः समानाः मानसहिताः सुभटाः राक्षसादयः येन तथाभूतं भुजविजितसमानं राक्षसेन्द्रादिमानम् राक्षसेन्द्रो विभीषणः आदिपदेन येषां ते राक्षेसेन्द्रादयः विभीषणादयः सुग्रीवप्रमुखा वानरभटाः तेभ्यः मानं समुन्नतिः यस्मात् सः राक्षसेन्द्रादिमानस्तं राक्षसेन्द्रादिमानम् महितः वृषभयानः वृषभो यानं यस्य सः शिवः महितः पूजितः वृषभयानः शिवः येन रामेश्वर पूजया येन शंकरः सम्मानितः तं महितवृषभयानं सीतया जनकनन्दिन्या शोमानं राजमानं एवम्भूतं हृदयमेव भक्तानां हृदयमेव विमानं यस्य एवम्भूतं हृदयविमानं यद्वा विमानं मानरहितं हृदयं यस्य एवम्भूतं राम एव अभिधानं नाम यस्य तादृशं ब्रह्म हृदय! स्मर स्मरणविषयं कुरु ध्याय।

महित वृषभयानं इति पदेन श्रीरामेश्वरस्थापना संकेतिता॥श्रीः॥

**राघवकृपाभाष्य**–अब नारद जी जीवमात्र को शिक्षा देते हुए दो मालिनी छन्दों से भगवान श्रीराम को माल्यार्पण करके कह रहे हैं–हे जीव! और हे मेरे हृदय! जो सम्पूर्ण गुणों के निधान हैं, योगीजन निरन्तर जिनकी स्तुति करते रहते हैं, जिन्होंने अपनी भुजाओं से गर्वीले सुभट राक्षसों को जीता है, राक्षसेन्द्र विभीषण सुग्रीवादि भक्तपरिकरों को जिनसे मान अर्थात् उन्नति मिली है, जिन्होंने रामेश्वर स्थापना के द्वारा वृषभयान शंकर को सम्मान दिया है जो सीताजी के साथ निरन्तर सुशोभित रहते हैं, भक्तों

का हृदय ही जिनका विमान है, ऐसे श्रीराम नाम वाले ब्रह्म का स्मरण करो। 'महितवृषभयानं' इस पद से नारद जी ने श्रीरामेश्वर स्थापना की प्रामाणिकता सिद्ध की है।।श्री।।

इदानीं मनोरथं प्रकटीकरोति–

**रघुवर तव मूर्तिर्मामके मानसाब्जे**
**नरकगतिहरं ते नामधेयं मुखे मे।**
**अनिशमतुलभक्त्या मस्तकं त्वत्पदाब्जे**
**भवजलनिधिमग्नं रक्ष मामार्तबन्धो।।९९।।**

**रा०कृ०भा०–**मनोरथं कुरुते–हे रघुवर रघुश्रेष्ठ श्रीराम! तव मङ्गलमयी भ्रमरीकल्पा श्याममूर्तिः मामके नारदीयमानसाब्जे मानसस्वरूपे कमले विराजताम्। नरकगतिहरं नरकस्य गतिं हरतीति नरकगतिहरं एवम्भूतं नरकान्तकं तवनामधेयं रामनामाख्यम् मम मुखे भवतु। अतुलभक्त्या अतुलनीयानुरक्त्या अनिशं सततं मम मस्तकं त्वत्पदाब्जे पदकमले भवतु भवजलविधिमग्नं भवसागरनिमग्नं मां हे आर्तबन्धो! रक्ष इति विनम्र प्रार्थना।।श्रीः।।

**राघवकृपाभाष्य–**अब श्री नारद अपना मनोरथ प्रकट करते हैं–हे रघुवर! हे श्रीराम! आपकी मंगलमयी भ्रमरी के समान श्यामलमूर्ति मेरे मानसकमल में विराजमान होजाए। नरकगति को नष्टकरने वाला आपका रामनाम मेरे मुख में हो और अतुलनीय भक्ति से युक्त मेरा मस्तक आपके चरणकमल में निरन्तर रहे। हे आर्तबन्धो! करुणानिधान श्रीराम! भवसागर में डूबे हुए मुझ जैसे पतितचक्रचूड़ामणि की रक्षा कर लीजिए। मुझे बचा लीजिए।।श्री।।

**रामरत्नमहं वन्दे चित्रकूटपतिं हरिम्।**
**कौसल्याशुक्तिसम्भूतं जानकीकण्ठभूषणम्।।१००।।**

**रा०कृ०भा०–**चित्रकूटपतिं हरिं कौसल्याशुक्तिसम्भूतं जानकीकण्ठभूषणं रामरत्नं अहं वन्दे इत्यन्वयः।

चित्रकूटस्य पतिः चित्रकूटपतिः तं चित्रकूटपतिं चित्रकूटाधीश्वरं हरिं

भक्तमनोहारिणं एवम्भूतं कौसल्यारूपिणी या शुक्तिः तस्यां सम्भूतं कौसल्याशुक्तिसम्भूतं जानकीकण्ठभूषणं जानक्याः सीतायाः कण्ठस्य भूषणं एवम्भूतं रामरत्नं अहं वन्दे नमामि अभिवादये।।श्रीः।।

**श्रीराघवकृपाभाष्य–**जो चित्रकूट के स्वामी एवं भक्तों के मन को हरनेवाले हैं जो कौसल्यारूप शुक्ति में प्रकट हुए हैं, जो श्रीजानकीजी के कण्ठ के आभूषण हैं ऐसे रामरूप नीलम रत्न की मैं वन्दना करता हूँ।।श्री।।

**श्रीराघवकृपाभाष्यं श्रीरामस्तवराजके।**
**श्रीरामभद्राचार्येण भाषितं भक्तये हरेः।।**
**श्रीराघवकृपाभाष्यं श्रीराघवकृपाकृतम्।**
**श्रीराघवकृपां देयात् श्रीराघवकृपाफलम्।।**

इति श्रीचित्रकूटतुलसीपीठाधीश्वर धर्मचक्रवर्ती महामहोपाध्याय पदवाक्यप्रमाणपारावारीण जगद्गुरु रामानन्दाचार्य स्वामिरामभद्राचार्य प्रणीतं श्रीरामस्तवराजे श्रीराघवकृपाभाष्यं सम्पूर्णम्। **श्रीराघवः शन्तनोतु।**

**सीताराम जय सीताराम।**
**सीताराम जय सीताराम।।**



धर्मचक्रवर्ती श्रीतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य
स्वामी श्रीरामभद्राचार्यजी महाराज द्वारा प्रणीत

## भगवान् श्रीसीताराम जी की

# नीराजना

वन्दे श्रीरामं प्रभु वन्दे श्रीरामम्।
मुनिजनमनोभिरामं नवमेघश्यामम् ।। जय राम जय श्रीराम।।
पूर्णब्रह्मनिष्कामं पूरितजनकामम् प्रभु पूरितजनकामम्।
निजजनशोकविरामं व्रीडितशतकामम् ।। जय राम जय श्रीराम।।
तरुणतमालमनोहर रघुवर दनुजारे प्रभु रघुवरदनुजारे।
तूणशरासनशरधर दीनं पाहि हरे ।। जय राम जय श्रीराम।।
समरनिहतदशकन्धर सेवकभयहारिन् प्रभु सेवकभयहारिन्।
भवपाथोनिधिमन्दर दण्डकवनचारिन् ।। जय राम जय श्रीराम।।
विधुमुखजलजविलोचन पीताम्बरधारिन् प्रभु पीताम्बरधारिन्।
कोसलपुरजनरंजन हनुमत्सुखकारिन् ।। जय राम जय श्रीराम।।
भरतचकोरनिशेषं रिपुसूदनबन्धुम् प्रभु रिपुसूदनबन्धुम्।
शरणागतसुरधेनुं नौमि कृपासिन्धुम् ।। जय राम जय श्रीराम।।
जय जय भुवनविमोहन जय करुणासिन्धो प्रभु जय करुणासिन्धो।
जय सीतावर सुन्दर जय लक्ष्मणबन्धो ।। जय राम जय श्रीराम।।
दर्शय निजमुखकमलं भवसागरसेतो प्रभु भवसागरसेतो।
हर 'गिरिधर' भवभारम् दिनकरकुलकेतो।। जय राम जय श्रीराम।।

॥ श्री ॥

# जीवन के पञ्चपाथेय

१. भगवान् श्रीसीताराम जी की शरणागति में प्राणिमात्र का अधिकार है।

२. हिन्दुत्वभावना एक ऐसी गंगा है जिसके स्पर्श से समस्त संसार पवित्र हो सकता है।

३. वैदिक वर्णाश्रम व्यवस्था ही सनातन धर्म का मूलमंत्र है।

४. जगत् को स्वभाव से जीतो प्रभाव से नहीं।

५. वैष्णवता ही मानवता की संजीवनी सुधा है।

—: प्रदाता :—

सर्वाम्नाय अनन्त श्रीसमलंकृत श्रीतुलसीपीठाधीश्वर
धर्मचक्रवर्ती जगद्गुरु रामानन्दाचार्य

**स्वामीश्रीरामभद्राचार्य जी महाराज**

(चित्रकूटधाम)